*३. पुरो दधिरे,*
सा०–६।३६।२
*४. उद्दिश्य ... धारयामि करोमीत्यर्थः,*
सा०मु०–५।५३।५

**अनु√धाव्**

*अनुगच्छसि,*
सा०–९।९७।५५

**अनु√धी**

*१. अनुपूर्वं शास्त्रोक्तेन क्रमेण ध्यायन्त चिन्तयन्ति सततम्,*
उ०–१०।४०।१०
*२. अनुदधति,*
वे०सा०–१०।४०।१०

**अनुदीध्यान, ना**

*दीप्यमानाः,*
वे०– ३।४।७ सा०–३।४।७, ३।७।८
(दीप्यमानाः अथवा स्वकर्मभिरग्निं दीपयन्तः ऋत्विजः)

**अनुधूपित**

*शत्रवः धूपायमानहृदयाः,*
वे०– २।३०।१, सा०–२।३०।१०
(धूपायमानहृदया मदीयाः शत्रवः)

**अनु√ध्मा**

*१. शब्दापयन्ति,*
वे०–८।७।१६
*२. अनुगच्छन्ति,*
सा०–८।७।१६
*३. साकल्येन व्याप्नुवन्ति,*
सा०–८।७।१६
*४. उच्छ्वसितावयवे कुर्वन्ति,*
सा०–८।७।१६

**अनु√नश्**

*१. त्वत्तो दानानन्तरं प्राप्नोति, लभते तदेत्यर्थः,*
उ०–१०।७।२
*२. अवाप्नोति,*
वे०–१०।७।२
*३. अग्रतोऽनुप्रापयति,*
वे०–१।१६३।७
*४. अनुक्रमेण समीपं गमयति,*
सा०–१।१६३।७
*५. प्राप्नोति, लभते,*
सा०–१०।७।२

**अनु√नी**

*१. अनुशब्दोऽत्र धात्वर्थानुवादी, लम्बते प्रलम्बत इति यथा सर्वयजमानान् स्वर्गं नयसि,*
स्क०–१।९१।१
*२. अन्विति पश्चाद्भावे। नेषीत्यपि लोडर्थे लट्। पश्चान्नय। कस्य पश्चात् सामर्थ्याद् मरणस्य। मरणोत्तरकालं विस्तीर्णं, स्वर्गम् इन्द्रलोकं वाऽस्मान्नयेत्यर्थः,*
स्क०–६।४७।८
*३. अनुगमय,*
सा०–६।४७।८
*४.अन्धपङ्गुत्वपरिहारेण अनुनीतवानसि,*
सा०–४।३०।१९
*५. अस्माननुक्रमेण प्रापयसि,*
सा०मु०–१।९१।१
*६. अनुक्रमेण नयथ,*
सा०मु०–५।५४।६

**अनु√ नु, नू**

*१. अनु स्तुतवन्तः,*

स्क०-१।८०।९, वे०-१।८०। (अनु अस्तुवन्)

*२. अनुक्रमेण स्तुवन्तः,*

वे०-८।९२।३३

*३. अनुक्रमेण पुनः पुनः स्तुतिं कुर्वन्तः,*

सा०-८।९२।३३, सा०मु०-१।८०।९ (पुनः पुनरस्तुवन्)

**अनुपक्षित**

*१. अनुपक्षीणम्,*

वे०-३।१३।७, सा०-३।१३।७ (व्यये क्रियमाणेऽपि अनुपक्षीणम्)

*२. अनुपक्षीणोदकम्,*

वे०-१०।१०१।५, सा०-१०।१०१।५ (अनुपक्षीणं किञ्चिदुदकोपक्षयरहितम्)

**अनुपथ**

*अनुकूलमार्गाः,*

सा०मु०-५।५२।१०

**अनु√पश्**

*अनुक्रमेण पश्यति वर्षतीत्यर्थः,*

सा०-१।१६४।९

**अनुपूर्व**

*१. अनुक्रमेण,*

उ०-१०।१८।५, वे०-१।११७।३, १०। १३१।२, सा०-१०।१८।५ (पूर्वं पूर्वमनुक्रमेण)

*२. आनुपूर्व्येण,*

स्क० - १।११७।३ (आनुपूर्व्येण यथा-योग्यमित्यर्थः), सा०-१०।१३१।२, सा०मु०-१।११७।३

*३. यथाज्येष्ठम्,*

उ०-१०।१८।६ (ज्येष्ठक्रमेण वर्णानुक्रमेण वेत्यर्थः), वे०-१०।१८।६, सा०-१०।१८।६ (अनुपूर्वमानुपूर्व्येण। अव्ययी-भावः। पूर्वो ज्येष्ठः। ज्येष्ठानुपूर्व्य)

**अनु-प्र√सृ**

*प्रसारितवन्तः,*

वे०- १०।५६।५, सा०- १०।५६।५ (अनुज्योतींष्युदकानि वा प्रासारयन्तः। प्रसारितवन्तः)

**अनुबद्धधान**

*१. परिगृह्य अनुक्रमेण,*

वे०-४।२२।७

*२. वृत्रेण बध्यमानाः,*

सा०-४।२२।७

**अनुब्रुवाण**

*अनुक्रमेण संकीर्तयन्,*

सा०- ५।४४।१३, मु०- ५।४४।१३ (अनुक्रमेण कीतर्यन्)

**अनु√भा**

*अनु दीप्यसे,*

वे०-३।६।७

**अनु√भू**

*१. प्रति ... भवेत्,*

स्क०-१।५२।११

*२. सदृशं भवति,*

वे०-१।५२।११

*३. अनन्तरमेव भवति,*

वे०-१।१७३।८

*४. अनुक्रमेण ...भवति,*

सा०-१।१७३।८

*५. जानाति,*

सा०-३।३२।११

*६. अनुसृत्य भवतः वर्तते, त्वदधीने अभूतामित्यर्थः,*

सा०-१०।१४७।१

*७. अनुभवति,*
मु०-१।५२।११

## अनु√भृ

*अनुभरति।करोति,*
सा०-९।७२।३

## अनुभर्त्री

*१. युष्माननुहरन्ती युष्मद्गुणसदृशी,*
सा०मु०-१।८८।६
*२. अनुशब्दोऽत्र धात्वर्थानुवादी। लम्बते प्रलम्बत इति यथा। बिभर्ति-धारणार्थः। युष्मद्गुणानां धारयित्री। सकलयुष्मद्गुणसङ्कीर्तनयुक्तेत्यर्थः।*
स्क०-१।८८।६

## अनु√मद्

*१. अनु हृष्यति,*
स्क०- १।९१।२१ (प्रहृष्टाः स्याम), सा०- ३।३४।८ (हृष्यन्ति। हर्षमनु स्वयं हृष्यन्तीत्यर्थः), ६।७५।१८ (अनुहृष्यन्तु) १०।१२०।१, ४ (पश्चात्हृष्यन्ति) १२०।१ (अनुलक्ष्य... हृष्यन्ति), सा० मु०- १।५२।९ (आनुपूर्व्येण हर्षं प्रापयन्), ५२।१५ (अनुक्रमेण हर्षं प्रापयन्), ९१।२१ (अनुलक्ष्य हर्षयुक्ता भवेम), १०३।७ (पश्चात् हर्षः प्राप्ताः), १२१।११ (हृष्टमकुरुताम्), ५।३६।२ (हृष्यति)

*२. अनु मादयति,*
स्क०-१।५२।९ (अनु 'तृतीयार्थे', पा० १।४।८५), इत्ययमनुः कर्मप्रवचनीयः। सहार्थश्चात्र तृतीयार्थः। सोमेन मत्ता इन्द्रेण सहेत्यर्थः), ५२।१५ (सोमेन माद्यन्ति मत्ता वा। अनु त्वा 'तृतीयार्थे' (पा०-१।४।८) इत्येवमयमनुशब्दः कर्मप्रवचनीयः) सा०-१।५२।१५ (त्वदीयमदानन्तरं तेऽपि मदं प्राप्ताः), १७३।७ (अनुकूलं मादयन्ति हर्षयन्तीत्यर्थः), १८४।४ (अनुक्रमेण माद्यन्ति), ३।४७।४ (मादयति), ८।१५।९ (अनु मादयति... तव मदमनु-लक्ष्य पश्चान्माद्यति)

*३. अनुक्रमेण स्तौति ,*
वे०-१।१०२।३ (स्तुमः), सा०-४।३८।३ (स्तौति ... अनुक्रमेण), ९।११०।२, १०।१२०।४ (अनुक्रमेणाभिष्टुमः), सा० मु०-१।१०२।३ (अनुक्रमेण स्तुमः)

*४. अनुपूर्वं स्तुहि,*
उ०-१०।६३।३

*५. लक्षीकृत्य स्तुवन्ति,*
सा०-४।१७।५

*६. अनुष्टुवन्ति, अनुस्तुवन्ति,*
वे०-९।११०।२, वे०सा०-१०।६३।३, ६७।९, ७३।८, सा०-६।१८।१४, ९।८६।२४

*७. अनुमन्यते,*
स्क०- १।१२१।११ (अनुमोदितवान्), वे०-१।१७३।७, सा०-१।१२१।११, १६२।७ (अनुमोदन्ताम्। सम्यक् कृतमिति परितुष्यन्तु)

*८. अनुतर्पयति,*
उ०-१०।६३।३ (तर्पय), ६७।९ (अनुतृप्येम)। तत्तृप्त्यनन्तरं सोमेन सदा तृप्येमेत्याशास्महे इत्यर्थः), ७३।८, वे०-१०।१२०।४ (तर्पयन्ति)

*९. अनुरभीत्येतस्य स्थाने। मदतिरर्चति कर्मा (तु०निघ० ३।१४) अभिष्टवामेत्याशास्महे,*
स्क०-१।१०२।३

*१०. मदतिश्चात्र सामर्थ्यान्मोदानार्थो गत्यर्थो वा। अनुमोदितवन्तः अनुगतवन्तो*

वा त्वाम्। अथवा मदतिरर्चतिकर्मा ( तु० निघ०३।१४ )। अनु इत्येष समित्येतस्य स्थाने। संस्तुतवन्तः ...अथवा अनुशब्दोऽत्र 'तृतीयार्थे' ( पा० १।४। ८५ ) इत्येवं कर्मप्रवचनीयः। सहार्थश्चात्र तृतीयार्थः। मद्रतिरपि तृप्त्यर्थः। त्वया सोमपानात् प्राप्तहर्षेण सहातृप्यन्नित्यर्थः,
स्क०-१।१०३।७
**११. मदिः सकर्मकश्च भवति,**
वे०-१।५२।१५

**अनुमद्यमान**

*१. अनुमाद्यमानः,*
वे०-७।६३।३, सा०-१०।९८।८
*२. अनुमोद्यमानः,*
वे०-१०।९८।८

**अनुमाद्य, द्या**

*१. अनुक्रमेण सर्वे स्तुत्या मादनीया,*
सा०मु०-१।११५।३
*२. अनुष्टुत्याः,*
स्क०-१।११५।३
*३. अनुमोदनीयाः,*
वे०-१।११५।३ (स्तुत्या अनुमोदनीयाः), ७।६।१, वे०सा०-९।१०७।११
*४. स्तोतव्यः,*
स्क०-६।३४।२ (मदति (निघ.३।१४) इत्यर्चतिकर्मा) अनुशब्दश्चात्र धात्वर्थानुवादी। स्तोतव्यः)
वे०-९।२४।४, ७६।१
*५. स्तुत्यस्य,*
सा०- ६।७६।१, ७।६।१, ९।२४।४
*६. अनुमदनीयः,*
वे०-६।३४।२। सा०-९।७६।१

**अनु√मन्**

*१. अन्वजानन्*
सा०मु०-१।११६।१७
*२. अनुमोदितवन्तः,*
स्क०-१।११६।१७
*३. अनुजानामि। इच्छामीत्यर्थः,*
स्क०-६।५२।१
*४. अनुमननं करोति,*
वे०-८।६२।११
*५. अनुमतिं करोति,*
स्क०-६।७२।३, (अनुमतवती), सा०-४।१७।१, (अन्वमन्यता, अनुमतीचकार) ६।५२।१, ८।६२।११
*६. अनुमन्यन्ताम्। अव्याघातेन वर्तन्तामित्यर्थः,*
उ०-१०।३७।५, वे०-१०।३७।५ (अनुमन्यन्ताम्)

**अनुमति**

**देवि,**
सा०- १०।५९।६

**अनु-मन्द्**

*अहृष्यन्,*
सा०- ३।५१।९

**अनु-मा**

*१. हीना मीयते,*
वे०- १।५६।५। सा०- ७।२१।७ ('हीने पा०सू० १।४।८६ कर्मप्रवचनीयः। ...हीना ममिर इत्यर्थः)
*२. अनुसृत्य ...स्तुत्या भान्ति,*
सा०- १।१६३।८
*३. अन्वमंस्त...,*
सा०मु०- १।५७।५

**अनु-मृच्**

*१. अनुलिम्पतु,*
वे०- १।१४७।४
*२. अनुमार्ष्टु अनुक्रमेण लुम्पतु,*
सा०- १।१४७।४
*३. अवलुम्पतु। स्वात्मानमेवावृत्य दहत्वित्यर्थः,*
सा०- १।१४७।४

**अनु- ममृजान**

*सर्वं वनं मृजञ्शोधयन्। दहन्नित्यर्थः,*
सा०- १०।१४२।५

**अनु-मृश्य**

*१. विचार्य,*
सा०- १०।६८।५
*२. निश्चित्य,*
सा०- १०।६८।५
*३. पर्यालोच्य,*
उ०- १०।६८।५
*४. ज्ञात्वा,*
उ०- १०।६८।५

**अनु √म्ना**

*अनुमन्यते ...विसंवाद न कुरुत इत्यर्थः,*
सा०- ७।३१।७

**अनु, नू-याज**

*अनु प्रधानात्पश्चाद्यष्टव्यानेतन्नामकान्,*
सा०- १०।५१।८

**अनु-यम्**

*१. अनु नियच्छतु,*
वे०- ४।५७।७
*२. नियमतु,*
सा०- ४।५७।७

**अनुयच्छमान, ना**

*१. अनुबध्नन्तः। प्रजोत्पत्त्यादिकर्मसन्तानाविच्छेदार्थमित्यर्थः ,*
स्क०- १।१०९।३, वे०- १।१२३।१३
(अनुबध्नती)
*२. नियच्छन्तः,*
वे०- १।१०९।३।, वे०-७।५६।१३
(अनु नियच्छन्ति)
*३. आनुकूल्येन प्रवर्तमाना,*
सा०- १।१२३।१३
*४. प्रयच्छन्तः,*
सा०- ७।५६।१३
*५. अनुक्रमेण नियतान् कुर्वन्तु,*
सा०मु०- १।१०९।३

**अनुयत**

*१. अनुबद्धं यजमानम्,*
वे०- ५।४१।१३
*२. अभिगतम्,*
सा० मु०- ५।४१।१३

**अनु √या**

*१. अनुगच्छति,*
वे०सा०- ३।१।१७। वे०सा०मु०- ६।६।२, सा०- ६।१२।५, ९।१११।३
*२. गच्छन्ति प्राप्नुवन्ति,*
सा०मु०- ५।८१।३

**अनुरक्षमाण**

*१. उपरक्षमाणौ,*
वे०- ५।६२।५
*२. रक्षमाणौ,*
सा०- ५।६९।१
*३. पालयन्तौ,*
सा०मु०- ५।६२।५
*४. अनु रक्षमाणौ,*
मु०- ५।६९।१

अनु √राज

१. लक्षीकृत्य राजति,
वे०- २।४३।१
२. शृण्वतोऽनुरक्तान् करोतीत्यर्थः,
सा०- २।४३।१
३. प्रकाशयति,
सा०- ९।९६।१८

अनु √री

१. अनुगच्छति,
वे० १।८५।३
२. अनुसृत्य...स्रवति। यत्र मरुतो गच्छन्ति वृष्ट्युदकमपि तदनुसारेण तत्र गच्छतीत्यर्थः,
सा०मु०- १।८५।३

अनु, नू- रुध्

१. अनुरुध्यते,
वे०- ३।५५।५
२. अनुरुन्धन् उत्पत्त्यानुगुण्येनानुतिष्ठन्नग्निः,
सा०- ३।५५।५
३. सूर्यः,
सा०- ३।५५।५

अनु √रुह

१. आरोहामि, भवत्करणेन करोमि,
उ०- १०।१३।३
२. अनुरोहामि,
वे०- १०।१३।३, सा०- १०।१३।३
(अनुरोहामि ... करणं करोमि)
३. अनुक्रमेण आरोहति,
सा०- १।१४१।५
४. उपरि प्रज्वलति,
सा०- १।१४१।५
५. क्रमेणानुतिष्ठति,
सा०- २।५।४
६. स्तुत्या सर्वे गुणास्त्वयि प्ररोहन्ति,
सा०- ८।१३।६
७. आरोहन्ति वेष्टयति,
वे०- ८।१३।६

अनुल्बण

१. उल्बणमिति दुःसहमग्नेस्तेजः। तद्वददुःसहेन,
सा०- ८।२५।९
२. अनतिरिक्तम्,
सा०- १०।५३।६

अनु √वद्

याज्यापुरोनुवाक्याभ्यां देवताः स्मारयति,
सा०- २।१३।३

अनु √वश्

१. अनु कामयते,
वे० १।१२७।१
२. स्वयमपि तदाज्यं ...कामयते स्वीकारोतीत्यर्थः,
सा०- १।१२७।१

अनु √वस्

१. मर्मच्छादनान्तरम् ...आच्छादयतु,
सा०- ६।७५।१८
२. अनु छादयतु,
वे०- ६।७५।१८

अनु √वह्

१. आत्मानं प्रापयन्,
वे०-१०।१५।८
२. आनुपूर्व्येण देवेभ्यश्च पितृभ्यश्च प्राप्नुवन्तः। दत्तवन्तः इत्यर्थः,
सा०- १०।१५।८

अनु√गा

१. अनु गच्छति,
वे०-१।१४८।४, ४।४०।३, १०।१४२।४
२. अनुकूलं ज्वालाः आदाय गच्छति,
सा०- १।१४८।४
३. लक्षीकृत्य गच्छति,
सा०- ४।७।१०
४. प्रेरयति,
वे०- ४।७।१०
५. अनुसृत्य यथा वान्ति,
सा०- ४।४०।३
६. अनुगुणं प्रवर्तते,
सा०- १०।१४२।४

अनु√विद्

१. लब्धवानसि ...पश्चात् ,
स्क०- १।६।५
२. अन्विष्यालभत्,
सा०- २।१२।११
३. अन्विष्य लब्धवानसि,
सा०मु०- १।६।५
४. लब्धवान्,
वे०- २।१२।११
५. अनुक्रमेण अलभथाः,
सा०- ८।९६।१६
६. अलभन्त,
सा०- ४।५८।४, सा०मु०- ५।११।६
७. अन्वेषमाणा लब्धवन्तः,
उ०-१०।७१।३।
८. अनुगम्य अलभत,
सा०- ३।९।४, १०।१०९।५
९. लब्धवन्तो मन्त्रसामर्थ्यात्,
सा०- ७।७६।४
१०. अनु ज्ञायते,
वे०- १।१३२।३
११. अनुक्रमेणेषदीषत्। तमोऽवरुध्य लब्धवन्त इत्यर्थः,
सा०मु०- ५।४०।९
१२. उक्तक्रमेणैव कर्त्ता सन् विन्दते, उदकप्राप्तिप्रकारं जानन्ति,
सा०- १।१३२।३
१३. अभिलक्ष्य...जानन्ति,
सा०- १।३४।२
१४. जानन्ति,
स्क०- १।३४।२
१५. अनु ...अजानन्,
वे०- १।३४।२
१६. उपलक्ष्य यात्रायां जानन्ति,
मु०- १।३४।२
१७. अनुक्रमेण जानाति,
सा०- १।१६४।१८
१८. अनुक्रमेण ज्ञातवानस्मि,
वे०- ४।२७।१
१९. आनुपूर्व्येणाज्ञासिषम्। परमात्मनः सकाशात् सर्वे देवा जाता इत्यवेदिषमित्यर्थः,
सा०- ४।२७।१
२०. आनुपूर्व्येण जानाति। इमाः सुखेन गन्तव्या असुखेनेति वैवमनुक्रमेण जानातीत्यर्थः,
सा०- १०।१७।५
२१. आनुपूर्व्येण जानाति,
उ०-१०।१७।५
२२. अन्वबुध्यत,
सा०- १०।१३९।४
२३. अभिजानान्ति,
सा०- ७।३३।७

अनु- वित्त

१. अनुक्रमेण लब्धः,
वे०- ४।१८।१

*२. आनुपूर्व्येण, सर्वैर्जायमानैर्लब्धः,*

सा०- ४।१८।

**अनु√वी**

*१. गच्छन्तौ,*

वे०- १०।१०४।२

*२. स्तुतशस्त्रादीन्यनुकामयस्व,*

सा०- १०।१०५।२

**अनु√वृत्**

*१. प्रदीपार्चिवत् आनुपूर्वीं गच्छति,*

उ०- १०।३७।३

*२. अनुवर्तनं कुर्वन्ति,*

वे०- ४।३०।२

*३. लक्षीकृत्य ...वर्तन्ते,*

सा०- ४।३०।२

*४. अनुगच्छति,*

सा०मु०- ५।६२।४

*५. उदेषि,*

सा०- १०।३७।३

**अनु√वेन्**

*१. अनु अकामयत,*

वे०-४।१८।११, १०।१३४।१ (अनु-कामयते)

*२. अनुक्रमेण कामयते,*

सा०- १०।१३५।१

*३. अनुग्राह्यत्वेन कामयते,*

सा०- १०।१३५।१

*४. अनुकामयमानम्,*

वे०- १०।१३५।२, सा०- १०।१३५।२ (मामनुगतं कामयमानम्)

*५. अयाचत,*

सा०- ४।१८।११

**अनु- व्रत, ता**

*१. अस्मदनुकूलव्यापारयुक्ते,*

सा०- १।३४।४

*२. अनुकूलकर्मणे यजमानाय,*

सा०मु०- १।५१।९

*३. अनुकूलकर्मा सन्,*

सा०- ८।१३।१९

*४. अनुकूलाम्,*

सा०- १०।३४।२

*५. अनुगतकर्माणम् अनुकूलमित्यर्थः,*

उ०- १०।३४।२, वे०- १।५१।९ (अनुगतकर्मणे)

*६. अनुगुणकर्मा,*

वे०- ८।१३।१९

*७. अनुव्रतशब्दो भक्तपर्यायः,*

स्क०- १।५१।९

**अनु√शंस्**

*१. आशंसितुम् उपतिष्ठन्ति,*

वे०- ५।५०।२

*२. क्रमेण शंसितुं प्रभवन्ति,*

सा०- ५।५०।२

*३. शंसितुं प्रभवन्ति,*

सा०मु०- ५।५०।२

**अनु √शक्**

*अनुकर्तुं शक्नोति,*

उ०वे०सा०- १०।४३।५

**अनु√शास्**

*१. ज्ञेयतत्वम्, अस्मभ्यम् आचष्ट इत्यर्थः,*

स्क०- ६।५४।१

*२. अनुशास्ति नष्टद्रव्यप्राप्त्युपायमुप-दिशति,*

सा०- ६।५४।१

**अनु-शासन**

*१. मार्गोपदेशस्य,*

उ०- १०।३२।७

*२. मार्गोपदेशरूपस्य,*
सा०- १०।३२।७

**अनुशिष्ट**

*१. उपदिष्टः सन्,*
सा०- १०।३२।६
*२. प्रदर्शितमार्गः, सन्,*
सा०-१०।३२।७

**अनु √श्रथ्**

*१. अस्मदीया गा लक्षीकृत्य... विनष्टा मा कार्षीः। गावोऽश्वदर्शनात् विश्लिष्यन्ते,*
सा०- ४।३२।२२
*२. श्रथतिर्भेदनकर्मा,*
वे०- ४।३२।२२

**अनु √श्रु**

*१. अनुक्रमेण श्रृण्वन्ति,*
सा०- २।२४।१३
*२. अनुशासनं श्रृण्वन्ति,*
सा०- २।२४।१३

**अनुषज्, क्**

*१. आनुपूर्व्येण,*
उ०- १०।८३।१, (अनुषक्तमानुपूर्व्येण), स्क०- १।१३।५, वे०- ३।११।१। सा०- ४।७।५, ८।१२।१ (अनुषक्तमानुपूर्व्येण संततं यथा भवति तथा) ३।३१।१५।१
*२. आनुपूर्व्येणात्मानुगणम्, स्ववशवर्तीत्यर्थः,*
स्क०- १।५२।१४
*३. अनुक्रमेण,*
सा०- २।६।८, ४।४।१०, मु०-१।१३५ (अनुक्रमेण सक्तं परस्परं संबद्धम्)
*४. आनुपूर्व्येण सक्तम्,*
सा०- ३।११।१
*५. आनुपूर्व्येण। यथायोग्यमित्यर्थः,*
स्क०- १।७२।७
*६. आनुषगिति देवानामानुपूर्व्येण। यो यदा यथा यष्टव्यः तं तदा च यजेत्यर्थः,*
स्क०- ६।४८।४
*७. आनुपूर्व्येण निसर्गमारभ्य अव्यवच्छेदनेत्यर्थः,*
सा०- १०।४९।५
*८. आनुपूर्व्येण अन्यव्यच्छेदेनेत्यर्थः.*
उ०- १०।४९।६
*९. परस्परसंबद्धम्,*
सा०- १।१३।५ (अनुक्रमेण संक्तं परस्परं सम्बद्धम्), ३।४१।२
*१०. आनुपूर्व्यादनुक्रमेण,*
सा०- १०।१७६।२
*११. अनुस्यूतम्,*
वे०- १।५२।१४
*१२. अनुषक्तम्,*
वे०-१।१३।५, ७२।७, ६।४८।४ सा०- १।५२।१४ (अनुषक्तम्) ६।४८।४, (अनुषक्तं सततं यथा भवति तथा), १०।४९।५, ६, सा०मु०- १।७२।७, (अनुषक्तं संततं यथा भवति तथा)

**अनु √विध्**

*१. आनुपूर्व्येण साधनयन्,*
स्क०- १।२३।१५
*२. अनुक्रमेण रुन्धन्,*
वे०- १।२३।१५
*३. अनुक्रमेण पुनः पुननर्यन् वर्तते इति शेषः,*
सा०मु०- १।२३।१५

**अनु √ष्टु**

*१. आनुपूर्व्येण स्तुवन्ति,*
सा०- ८।३।८

२. *क्रमेण प्रशंसन्ति,*
सा०- ८।१५।६

**अनु-ष्टुभ्**

१. *संस्कृतस्य,*
वे०- १०।१८१।१
२. *अनुष्टुप्संबद्धं यागम्,*
सा०- १०।१२४।९
३. *अनुष्टुप्छन्दसा युक्तं स्तुतिविशेषम्,*
सा०- १०।१२४।९
४. *अनुष्टुप्छन्दसा,*
सा०-१०।१३०।४, १८१।१
(अनुष्टुप्छन्दसा युक्तस्य)
५. *अनुष्टोभनीयं स्तोतव्यम्,*
सा०- १०।१२४।९

**अनु-ष्ठा**

१. *आश्रित्य सर्वदा वर्ततां हर्षयत्वित्यर्थः,*
सा०- १।१३४।१
२. *अनु अधीत्यर्थे...अधि आश्रयथः। तादृशो रथो देवयजनं प्रत्यागत इत्यर्थः,*
सा०- १।१८३।२
३. *आनुगुण्येनाधितिष्ठतु,*
सा०- २।३१।३
४. *अनुकूलास्तिष्ठन्ति,*
सा०- ३।३०।४
५. *उद्दिश्य तिष्ठतु,*
सा०- ४।२०।२
६. *अन्वास्थिताः,*
वे०सा०- ९।११२।३ (या०- ६।५,६)
७. *अनुलक्ष्य स्थिताः बभूवुः,*
सा०मु०- १।५२।४
८. *अनुगतवत्यः,*
स्क०- १।५२।४ (अनुगच्छन्ति)
९. *अनुक्रमेण तिष्ठन्तीः,*
सा०मु०- १।५४।१०
१०. *अनुतिष्ठन्तीः,*
वे०- १।५४।१०
११. *अनुष्ठात्रीः, अनुष्ठाता,*
स्क०- १।५४।१०

**अनुष्ठित**

१. *निषिक्तम्,*
वे०- १०।६१।५
२. *प्रजापतिनापत्यार्थं निषिक्तम्,*
सा०- १०।६१।५

**अनुष्ठु**

१. *यागकर्म। यागं करोतीत्यर्थः,*
स्क०- १।९५।३
२. *कल्याणम् ,*
वे०- १।९५।३
३. *अनुक्रमेण,*
सा०- ४।४।१४, सा०मु०- १।९५।३
(सम्यगनुक्रमेण)

**अनु-ष्वध**

१. *स्वधा इत्यन्ननाम। स्वधायाम्। विभक्त्यर्थे अव्ययीभावः। सोमलक्षणस्यान्नस्य पाने सतीत्यर्थः,*
स्क०-१।८१।४ (अन्विति पश्चादभावे। 'स्वधा' (निघ० २,७) इत्यन्ननाम। सोमलक्षणस्यान्नस्य पश्चत्। सोमपानन्तरम्,
सा०मु०- १।८१।४
२. *सोमपानानन्तरम्,*
वे०- १।८१।४
३. *सोममुद्दिश्य,*
सा०- ३।६।९
४. *प्रतिहविः सर्वेष्वपि हविःषु दीयमानेषु,*
सा०- २।३।११
५. *हविः,*
वे०- ३।६।९

६. *स्वधां स्वधां प्रति देवान्,*

वे०- २।३।११

७. *स्वधया सवनीयपुरोडाशादिरूपेण अन्नेनानुगतम्,*

सा०- ३।४७।१

८. *अनुगतपुरोडाशम्,*

वे०- ३।४७।१

९. *प्रत्यहम्। हविर्लक्षणान्नप्रदानं स्वधा। अनु पश्चाद्वा,*

सा०- ५।५२।१, मु०- ५।५२।१ (प्रत्यहं विर्लक्षणान्न प्रदानम्)

१०. *हविषोऽनन्तरम्,*

वे०- ५।५२।१

११. *बलार्थम्,*

वे०- ९।७२।५ सा०- ९।७२।५ (बलमनु। बलार्थम्)

१२. *अन्नार्थम्,*

वे०- ९।७२।५। सा०- ९।७२।५ (स्वधेत्यन्ननाम)

## अनु-ष्वप्

*अनुवृत्तस्वप्नम् ,*

वे०सा०- ८।९७।३

## अनु-सच्, सश्च्

१. *अनुसेवध्वम्,*

वे०- ९।८२।५, वे०सा०- ७।१८।२५

२. *अनुक्रमेण सेवते,*

सा०- १।१४०।९

## अनु√सृ

१. *अनुगच्छति,*

वे०सा०- ९।६।४

२. *अन्वसरन्। अन्वगच्छन्। हिता हिताचरणापरा आसन्नित्यर्थः,*

सा०- ७।९०।४

३. *अनुक्रमेण अवतरेयुः,*

सा०मु०- ५।५३।२

## अनु√सृज्

१. *विसृजन्ति विक्षिपन्ति वर्षन्तीव्यर्थः,*

उ०- १०।६६।८

२. *अन्वसारयन्,*

सा०- १०।६६।८

## अनु√स्पश्

१. *अवगच्छन्तम्,*

वे०- १०।१४।१

२. *अबाधमानम्,*

सा०- १०।१४।१

३. *अनुर्निशब्दस्य स्थाने। स्पशिर्बन्धनार्थः। निबध्नन्तम्। शुभाशुभकर्मप्रवृत्तिलक्षणमार्गं निरूपयन्तमित्यर्थः, जीवितलक्षणमार्गं निरुन्धन्तम्,*

उ०- १०।१४।१

## अनुस्पष्ट

१. *दृष्टिगोचरो भवति,*

सा०- १०।१६०।४

२. *प्रस्पष्टकर्मा,*

वे०- १०।१६०।४

## अनु √स्पृश्

*क्रमेण दह। दहनोपायं दर्शयति,*

सा०- ४।४।२

## अनु√स्फुर्

१. *अनुस्फुरेयुः,*

सा० ६।६७।११

२. *अनुः कर्मप्रवचनीयः प्रतिना समानार्थः। यत् प्रति...स्फुरान् स्फुरन्ति। यत्र प्रक्षिप्ता आपश्चलन्त्यो दृश्यन्त इत्यर्थः,*

स्क०- ६।६७।११

*३. स्फुरतिर्गत्यर्थः। .... गच्छन्तीत्यर्थः,*
स्क०- ६।६७।११

अनु√स्मृ

*अनुकूलं जानीय,*
सा०- १०।१०६।९

अनुस्त्रयामन्

*१. ताभ्यां गच्छते मह्यम्,*
वे०-४।३२।२४
*२. पद्भ्यामेव गच्छते मह्यम्,*
सा०- ४।३२।२४

अनु√हा

*१. अनुगच्छति,*
वे०- ३।३१।१७, वे०- ३।३१।१७,
वे०सा०- ६।१८।१५, ७।३४।२४,
१०।८९।१३
*२. अनुगच्छताम्। अनुमन्येताम्,*
सा०- ७।३४।२४
*३. पुनः पुनरावृत्य वर्तेते,*
सा०- ३।३१।१७

अनु√ह्वे

*१. अनुक्रमेण कर्मसु आह्वयामि,*
सा०- १।३०।९
*२. अनुक्रमेण हुवे,*
वे०- १।३०।९, ५।५३।१६
*३. अनुक्रमेण लक्षणे कर्म प्रवचनीयः प्रति शब्देन समानार्थः। ....आह्वयामि आहूतवान्,*
स्क०- १।३०।९
*४. आह्वय,*
सा०मु०- ५।५३।१६

अनूक

*अस्थिसंधेः ... अनूच्यते समवेयत इत्यस्थ्नः संधिरनूक्यः,*
सा०- १०।१६३।२

आनूक

*आभरणम्,*
सा०मु०- ५।३३।९

अनूति

*१. अपालयिता इतरेषाम्,*
स्क०- ६।२९।६
*२. अरक्षणाय,*
वे०- ६।२९।६
*३. अनागमनेन,*
सा०- ६।२९।६

अनूधस्

*१. ऊधोवर्जिता माता,*
वे०- १०।११५।१
*२. ऊधोरहितोऽयं लोकोऽसौ लोकः,*
सा०- १०।११५।१

अनून, ना

*१. परिपूर्णम्,*
वे०- १।१४६।१९, २।१०।६, ४।२।१९
*२. सम्पूर्णम्,*
सा०-२।१०।६, ३।१।५, ४।२।१९,
७।२७।४,
*३. अविकलेन,*
वे०- ४।५।१
*४. अविकलं सम्पूर्णफलम्,*
सा०-१।१४६।१ ४।५।१ (अविकलने सम्पूर्णेन)
*५. सर्वगुणैर्न्यूनतारहितम्। सम्पूर्णगुण-मित्यर्थः,*
सा०- ६।१७।४
*६. अन्यूनम्,*
वे०-३।१।५, ७।२७।४, वे०सा०-
८।१६।४, सा०-१।१४६।१

**अनून- वर्चस्**

*१. अन्यूनतेजस्कः,*
वे०- १०।१४०।२
*२. संपूर्णतेजस्कः,*
सा०- १०।१४०।२

**अनूप**

*१. आनुपूर्व्येण वप्तारः प्रकरितारः प्रक्षेप्तारः,*
उ०- १०।२७।२३
*२. निम्ने देशे,*
वे०- ९।१०७।९, सा०- ९।१०७।९, (निम्ने देशे कलशे)
*३. क्रमेण अवस्थिता,*
वे०- १०।२७।२३
*४. वर्षादीनामानुपूर्व्येण वप्तारः प्रभावयितारः। प्रक्षेप्तारः,*
सा०- १०।२७।२३

**अनूर्ध्वभास्**

*१. अनुच्छ्रिततेजस्कान् शत्रून्,*
वे०- ५।७७।४, सा०- ५।७७।४ (अनुन्नततेजस्कान्)
*२. ऊर्ध्वभासोऽग्नयः। अग्निरहितान् अयष्टॄन्,*
सा०-५।७७।४, मु०-५।७७।४ (अग्निरहितान् अयष्टॄन्)

**अनूर्मि**

*१. अहिंसकम्। ऊर्मिर्हिंसाकर्मा,*
वे०- ८।२४।२२, सा०- ८।२४।२२ (ऊर्मिहिंसाकर्मा कैश्चिदप्यहिंस्यम्)
*२. शत्रुभिरगन्तव्यम्,*
सा०- ८।२४।२२

**अनृक्षर, रा**

*कण्टकरहितः,*
स्क०- १।२२।१५ (ऋक्षरः कण्टकः, तद्वर्जितः), ४१।४ (ऋक्षरः कण्टकः, तद्वर्जितः), वे०-१।२२।१५ (कण्टकवर्जितः), ४१।४ (कण्टकवर्जितः), २।२७।६ (कण्टकवर्जितः), १०।८५।२३ (कण्टकवर्जितः), सा० - २।२७।६ ('ऋक्षरः कण्टक ऋच्छतेः' इति तद्रहितः), १०।८५।२३ (ऋच्छरः कण्टक उच्यते। कण्टकरहिताः), सा०मु०- १।४१।४, २२।१५ (कण्टक- रहिता)

**अनृच्**

*अस्तुतिकानयजमानान्,*
सा०- १०।१०५।८

**अनृजु**

*१. कुटिलचित्तस्य,*
सा०- ४।३।१३
*२. कुटिलस्य,*
वे०- ४।३।१३

**अनृत, ता**

*१. असत्यम्,*
उ०सा०-१०।१०।४, स्क०- १।१०५।५, सा०-७।१०४।८, ८।६२।१२, १, १०।८७।११
*२. असत्यजनितम्,*
स्क०- १।२३।२२
*३. द्वेष्टविषयमसत्यम्,*
सा०- १।१०५।५, मु०- १।१०५।५ (द्वेषविषयमसत्यम्)
*४. असत्यानि अप्रियाणि पापानि,*
सा०- १।१५२।१
*५. मानससत्यरहिताः,*
सा०- ४।५।५, ७।८४।४ (सत्यरहितानि)
*६. असत्यस्य अविद्यमानसदृशस्य उत्पन्नप्रध्वंसिनो मायाविनो मेघस्य,*
उ०- १०।६७।४

*७. असत्यभूतं मायामयासुरं चरित्रम्,*
सा०- १०।१२४।५
*८. निरर्थकस्य,*
वे०- ७।८६।६
*९. यागरहितस्य,*
सा०- ७।६५।३
*१०. पापम्,*
वे०- ७।६१।५, ६५।३, वे०सा०- ७।६०।५, सा०- ७।८६।६
*११. अस्तुत्यविषयाणि स्तोत्राणि,*
सा०- ७।६१।५
*१२. अनृतकारिणं पुरुषम्,*
वे०- १०।१२४।५
*१३. तमसः,*
वे०सा०- १०। ६७।४
*१४. शाठ्यमयजमानविषयम्,*
वे०- १।१०५।५
*१५. नश्वरं शोषणस्वभावम्,*
सा०- १।१३९।२
*१६. अनृतभूतान्धकारम्,*
वे०- १।१३९।२
*१७. उक्तविलक्षणमन्धकारं गमनादिनिरोधं च,*
सा०- १।१५२।३
*१८. असुरैः कृता माया,*
सा०- २।२४।६
*१९.गोधनविषयाणि आसुराणां मायाः,*
वे०- २।२४।६
*२०. रक्षांसि,*
वे० - २।३५।६, सा० - २।३५।६ (मायाविनो रक्षांसि)

### अनृतदेव

*१. असत्येन यः क्रीडति सोऽनृतदेवः,*
वे०- ७।१०४।१४
*२. अनृता असत्यभूताः देवाः यस्य तादृशो यद्वहम्,*
सा०- ७।१०४।१४

### अनृतद्विष्

*१. अनृतस्य द्रोग्धारः,*
वे०- ७।६६।१३
*२. अयष्टृद्वेष्टारः,*
सा०- ७।६६।१

### अनृतुपा

*१. सर्वेषु सवनेषु पिबति,*
वे०- ३।५३।८
*२. न केवलमृतुष्वेव पिबति किन्तु अनृतुष्वपि। बहुशः सोमं पिबन्नित्यर्थः,*
सा०- ३।५३।८

### अनेद्य

*१. प्रशस्यः,*
स्क०वे०-१।८७।४ सा०-१।८७।४ (प्रशस्य नामैतत्। सर्वैरनिन्दितः), १६५। १२ (प्रशस्यनामैतत्, तु० निघ० ३, ८, प्रशस्यः)
*२. अकुत्स्यः,*
वे०- ५।६१।१३
*३. अनिन्द्यः*
वे०- १।१६५।१२, (अनिन्दनीयः) वे० सा०-६।१९।४, ८।३७।१, सा०मु०- ५।६१।१३
*४. सर्वैरनिन्दितः,*
सा०मु०- १।८७।४
*५. अनन्तिकस्थम्,*
सा०- १।१६५।१२

### अनेनस्

*१. अपापः,*
स्क०- ६।६६।७, सा०- ७।८६।४

*२. अनुपद्रवः,*
वे०- १।१२९।५
*३. पापरहितम् ,*
वे०सा०- ६।६६।७
*४. अपापत्वेन,*
सा०- १।१२९।५

**अनेहस्**

*१. अपापम् ,*
स्क०- १।४०।४, (अपापाम्) ६।५१। १६ (अपापम् सर्वपापवर्जितम्), स्क०वे०- ६।५०।३, वे०-८।१८। ५,२१, १०। ६३।१०, वे०सा०- ८।३१। १२, १०।६१।२२, सा०- १।१२९।९ (अपापेन। यज्ञगमनमार्गस्य स्तुतिचोदितत्वात्-अनेहस्तत्वम्) ३।५१।३, ६।७५।१०, ८।२२।२, ४७।१, (अपापान्यनुपद्रवाणि) ६७।१२, ६९। १६, सा०मु०-५।६५।५,
*२. अपापं दुःखरहितं सुखात्मकम्,*
सा०- १।१८५।३
*३. पापराहित्यम्,*
सा०- ६।५०।३
*४. पापरहितम्,*
सा०-६।५१।१६, १०।६३।१० (पापरहिताम्)
*५. निरवद्याः,*
वे०- ३।५१।३
*६. अनागस्के,*
वे०- ६।७५।१०
*७. क्रोधरहितां प्रसन्नचेतसमित्यर्थः,*
उ०- १०।६३।१०
*८. उपद्रवरहितम्*
वे०- १।४०।४ (उपद्रवरहिताम्) सा०- ३।९।१, ८।४५।११
*९. अनुपद्रवम्,*
वे०- १।१२९।९, १८५।३, ३।९।१, ५।६५।५, ८।२२।२, ४५।११, वे०सा०- ८।४७।१, सा०- ८।२२।२ (कैश्चिदप्यनुपद्रवम्)
*१०. केनाप्यहिंस्याम्,*
सा०- १।४०।४ (केनाप्यहिंस्याम् न हन्यते इति अनेहाः) मु०- १।४०।४
*११. अहिंसितम्,*
सा०- ८।१८।२१
*१२. अनाहन्तारो रक्षकाः,*
सा०- ८।१८।५

**अनेहा**

*अपाप इन्द्रः,*
वे०सा०- १०।६१।१२

**अन्त, न्ता**

*१. पर्यन्तम्,*
वे०-१।५४।१, ९२।११, ४।५०।१, वे०सा०-१०।११४।१०, सा०-७।८३।३
*२. अवसानम्,*
सा०-१।१६७।९, ३।६१।४, ६।२९।५, ७।९९।२, १०।१११।८, सा०मु०- १। ५२।१४, ५४।१, १००।१५
*३. पर्यवसानम्,*
सा०- १।१६४।३५
*४. पर्यन्ताः प्रदेशाः,*
सा०-७।६७।२, १०।८२।१ (पर्यन्तप्रदेशाः)
*५. पर्यन्तादपि प्रवृद्धः,*
सा०- १०।८९।११
*६. समीपपर्यन्तम्,*
सा०मु०- १।३०।२१
*७. भूमेः स्थानम्,*
सा०मु०- १।३३।१०

*८. द्यावापृथिव्योरेकदेशवर्तिनः,*
उ०- १०।८२।१ (पृथिव्यादिलोकानां पर्यन्ताः), स्क०-१।३३।१०, वे०- १०।८२।१ (द्यावापृथिव्योः पर्यन्ताः)
*९. वृक्षाग्रम्,*
सा०मु०- १।३७।६
*१०. समीपम्,*
वे०- १।३७।६
*११. उत्कृष्टां काष्ठाम्। यत्र सर्वा पृथिवी समाप्यते,*
सा०- १।१६४।३४
*१२. समाप्तिं संपूर्तिम्,*
सा०- ५।१५।५
*१३. तृतीयसवनगतम्,*
सा०- ६।४३।२
*१४. निकृष्टम्,*
स्क०- ६।४३।२, वे०- ६।४३।२ (नीचरसम्)
*१५. हिंसाम्,*
सा०- ७।२१।६
*१६. पारम्,*
सा०- १०।५७।३
*१७. दश दिशः,*
सा०- ४।५०।१
*१८. देशः,*
वे०- १।१६४।३५
*१९. प्रान्तान्,*
सा०मु०- १।९२।११
*२०. इयत्ताम्,*
सा०- ८।४६।११
*२१. समीपपर्यन्तम्,*
सा०मु०- १।३०।२१
*२२. इयत्ताम्,*
सा०- ८।४६।११

अन्तम, मा

*१. अन्तिकतमः,*
वे०- १।२७।५, १६५।५, ३।१०।८, ५५।८, ७।२२।४, ८।५।१८, १३।३, वे०सा०-६।४५।३०, ४६।१०, ८।३३।१५, ४५।१८, ६४।९, १०।१००।६, वे०सा०मु०- ५।२५।१, सा०- ६।५२।१४
*२. अन्तिकतमानामतिशयेन समीपवर्तिनाम्,*
सा०- ८।५।१८ (अन्तिकतमः अतिशयेन समीपवर्ती), सा०मु०- १।४।३
*३. अन्तिकतमस्य भूलोकस्य संबन्धीनि,*
सा०मु०- १।२७।५
*४. अन्तिकतमैः अश्वैः,*
सा०- १।१६५।५
*५. अन्तिकतमः तेषामतिशयेन समीपवर्ती ,*
सा०- ३।१०।८
*६. अन्तिकतमानि बुद्धिस्थानि,*
सा०- ७।२२।४
*७ अन्तिकतमः संनिकृष्टतमः,*
सा०- ८।१३।३
*८. अन्तमशब्दोऽन्तिकनाम ( तु०नि० २, १६ )। सन्निकृष्टतमम्। अत्यन्तोत्कृष्टमित्यर्थः,*
स्क०- १।२७।५
*९. सन्निकृष्टः,*
स्क०वे०- १।४।३, स्क०- ६।४६।१०, वे०- ६।५२।१४
*१०. अतिशयेन सन्निकृष्टः,*
स्क० ६।४५।३०, ६।५२।१४
*११. समीपे वर्तमानस्य दावाग्नेः,*
सा०- ३।५५।८

**अन्तक**

*१. अन्तको नाम राजा,*
स्क०- १।११२।६,
*२. ऋषिम्,*
वे०- १।११२।६
*३. शत्रूणामन्तकरम् एतत्संज्ञं राजर्षिम्,*
सा०मु०- १।११२।६

**अन्तक-द्रुह्**

*१. अन्तकानां द्रोग्धा। हिंसका अन्तका इति,*
वे०- १०।१३२।४
*१. अन्तकस्य हननशीलस्य राक्षसादेर्यमस्यैव वा द्रोग्धा,*
सा०- १०।१३२।४

**अन्तर्**

*१. मध्ये,*
उ०- १०।२७।९, (अन्तरिति च मध्यवचनः), ४२।८ (मध्यतः), ४६।६, ७९।३, ८०।३, उ०सा०-१०।५।५, १०।८।७, २७।१७, ३०।४, ४५।३, ४८।१०, स्क०- १।२४।७, ६।६६।४, स्क०वे० सा०- ६।५८।३, स्क०वे०सा०मु०- १।९६।५, १०५।१, स्क०सा०- ६।७२।४, ४३।३, ४४।२४, स्क०सा०मु०- १।११६।२४, २३।१९,२०, ५४।१०, ६७।५, ७०।२, ९५।१०, वे०- ३।१।३, ४४।३, ५८।१, वे०सा०- १।१६४।१७, १६४।३३, १६८।५, १८२।६, २।१२।३, ३।५५।२, ९, १५, ४।१।७, १३।४, ७।१८।२४, ८।२९।२, ३, १०।१९, ९।६२।७, ८२।४, १०।१७३।९, सा०- १।१३२।३, १५७।५, १५९।४, १६१।४, १६३।४, १६४।९, १६४।३१, १७३।३, १८०।३, सा०-३। १।१४, ६।४, २।२७।८, ३५।७, ४०।२) मध्ये ऊधः प्रदेशे) ३।५४।९, ४।१।१३ (मध्ये स्थिताः), १६।१७, १८।४।२७।४ (मध्ये स्थितं), ६।११।२ (मध्ये वर्तमानः), २७।७, सा०- ७।२।३, ११।३, १२।१, ७१।५, ८७।२, ५, १०४।३, ८।२।४, ८।६८।१८, १००।९, १०१।१३, १४, ९।१२।५,७, १५।३, ६७।२३, ६९।२, ७८।३, ८६।४, १०।४।२, ६१।१, ८६।१५, १२५।७, १७३।१, १७७।१,२,३, १८३।३, १८९।२, सा०मु० ५।३१।३, ५९।२, ६२।५, ६, ६।४।४, ९।५
*२. मध्ये प्राणिनां हृदि प्रेरकतया वर्तमानाः सन्तः,*
सा०-२।२७।३, ४।५८।६ (हृदयमध्यगतेन चित्तेन। भावनासचिवेनेति यावत्)
*३. सङ्के.,*
वे०- १०।६१।१
*४. अन्तर्हितम्,*
सा०- ९।९६।७
*५. अन्तर्भूतः,*
सा०- ७।८६।२
*६. स्थिते,*
सा०- ३।५५।१२
*७. अन्तराले,*
सा०- १।१३५।९
*८. स्थापिताः,*
सा०मु० १।२४।७
*९. गूढम्,*
सा०- ३।१।३
*१०. अन्तरा,*
सा०- १।१७३।३

**अन्तः√ख्या**

*१. अन्तःशब्दोऽत्र तात्स्थात् अन्तस्थे मनसि वर्तते। हि शब्दो यस्मादर्थे। ख्यः इति चष्टेः पश्यतिकर्मणः ख्यादेशः। यस्मादत्यन्तभक्तं मनः अन्तस्थं पश्यसि। भक्ततां जानासीत्यर्थः,*
स्क०- १।८१।९
*२. अन्तःपूर्वः ख्यातिस्तिरोधनार्थः,*
वे०- १।८१।९
*३. अन्तः चकार,*
वे०- ५।३०।९
*४. गृहमध्ये निदधे,*
सा०मु०- ५।३०।९
*५. मध्ये विद्यमानं... पश्यसि, जानासीत्यर्थः,*
सा०मु०- १।८१।९

**अन्तः पेय**

*१. अन्तःस्थितं रसम्,*
वे०- १०।१०७।९
*२. अन्तः पानम्,*
सा०- १०।१०७।९

**अन्तराहित**

*मध्ये वर्तमानः सन्,*
सा०- ९।७०।५

**अन्तराभर**

*१. अन्तराहरः,*
वे०- ८।३२।१२
*२. अन्तराहरश्छिद्राणामापूरकः। छिद्रापिधायीत्यर्थः,*
सा०- ८।३२।१२

**अन्तर् √ई**

*१. अन्तः गच्छसि,*
वे०- २।६।७, ३।३।२, ३।६, ४।८।४, ९।८६।४२
*२. मध्येन गच्छति,*
वे०- १।३५।९ (उभयोः मध्येन गच्छति) १।१६०।१, ४।२।२, ७।८
*३. मध्ये गच्छति,*
सा०- ३।३।२, ४।२।२, (तेषामुभयेषां मध्ये ... गच्छसि), २।३ (षष्ठ्यर्थे द्वितीया। तेषां मध्ये) ७।८। (मध्ये स्थितमन्तरिक्षं...गच्छसि)
*४. उभयोर्लोकयोर्मध्ये गच्छति,*
सा०मु०- १।३५।९
*५. मध्येऽवस्थितः गच्छति। मध्ये स्थितः उभे अपि द्यावापृथिव्यौ ज्योतिषा व्याप्नोतीत्यर्थः,*
स्क०- १।३५।९
*६. द्यावापृथिव्योर्मध्ये गच्छति,*
सा०- ३।३।६, ४।८।४, ९।८६।४२
*७. तयोरन्तराले ...सर्वदा गच्छति,*
सा०- १।१६०।१
*८. जनानां हृदये गच्छसि जानासि,*
वा०सा०- २।६।७

**अन्तर्√गा**

*१. अन्तः गच्छति,*
वे०-३।३१।२१। ७।४।१। सा०- ७।४।१ (अन्तरा ... गच्छति)
*२. अन्तर्धानं विनाशं गमयतु,*
सा०- ३।३१।२१

**अन्तर् √धा**

*१. वृष्टिद्वारेण त्वं धारयसि मध्ये,*
स्क०- १।६२।९
*२. निदधाति ... मध्ये,*
स्क०- ६।४४।२३, सा०- ६।४४।२३ (मध्ये ... निहितवान्), सा०मु०- १।६२।९ (मध्ये ... धारयसि)

अन्तर् √यम्

*१. अन्तः नियच्छ,*
वे०- १०।१०२।३
*२. अन्तर्गमय,*
सा०- १०।१०२।३

अन्तर्वा-वत्

*१. वातेर्गत्यर्थस्य यङ्लुगन्तस्य शतृ-प्रत्यये रूपमेतत्। अन्तरत्यर्थं गतं लीनम् अप्रकाशम्,*
स्क०- १।४०।७
*२. मध्ये ... आगच्छन्,*
वे०- १।४०।७
*३. अन्तर्गतम्,*
वे०- ६।८।३
*४. अन्तःस्थितपुत्रपौत्रादिप्रयुक्तबाहु-विधवागुपेतम्,*
सा०- १।४०।७
*५. अन्तःस्थितबहुधनोपेतम्,*
सा०मु०- १।४०।७
*६. अन्तर्हितं तिरोहितम्,*
सा०मु०- ६।८।३

अन्तर्-विद्वस्

*१. अन्तर्जानन्,*
वे०- १।७२।७
*२. अन्तरिति वेदिमध्यमभिप्रेतम्। विद्वान्,*
स्क०- १।७२।७
*३. द्यावापृथिव्योर्मध्ये जानन्,*
सा०मु०- १।७२।७

अन्तश् √चक्ष्

*१. वर्तमानः पश्यति,*
वे०- १०।१९०।७
*२.मध्ये स्थित्वा...पश्यति करोतीत्यर्थः,*
सा०- १।१९०।७

अन्तश् √चर्

*१. द्यावापृथिव्योर्मध्ये ...चरति,*
वे०- ३।५५।८
*२. अन्तर्धारयति,*
सा०- ३।५५।८

अन्तः √स्था

*१. मार्गे तिष्ठन्तु,*
वे०- १०।५७।१
*२. तिष्ठन्तु ...मार्गमध्ये,*
सा०- १०।५७।१

अन्तर, रा

*१. सन्निकृष्टः,*
स्क०-१।३१।१३ (सन्निकृष्टश्च। ज्ञाति-स्थानीयश्चेत्यर्थः) ४४।१२, १०४।६, स्क०वे०- ६।६२।१०, स्क०वे०सा०-६।६३।२, वे०-१।१०।९, सा०-६।१५।३ (अन्तिकतरस्य सन्निकृष्णस्य)
*२. सनिकृष्टतमः,*
स्क०- १।१०।९
*३. अनिकृष्टः,*
सा०- ६।६२।१०
*४. मध्ये वर्तमानः ,*
उ०- १०।३३।१, वे०- १।४४।१२, ६।७५।१९, १०।५३।१, वे०सा०- १०।५३।१, (ऋत्विजां यष्टव्यानां देवानां च मध्ये सञ्चरन्), ८८।१५ (मध्ये) ९१।१३ (मध्ये), सा०मु०-१।४४।१२ (देव-यजनमध्ये वर्तमानः) (मध्ये), ९।८६।१३
*५. अन्तर्गतम्,*
सा०- ७।१०१।५
*६. अन्तरङ्गः,*
वे०- १।३१।१३, ७।१०१।५

*७. समीपवर्ती सन्,*
सा०मु०- १।३१।१३
*८. अव्यवहितस्य समीपे वर्तमानस्य च,*
सा०- १०।११५।५
*९. समीपवर्ती,*
सा०- २।४१।८
*१०. समीपस्थः,*
वे०- ६।५।४
*११. अभ्यन्तरवर्ती सन्,*
सा०मु०- ६।५।४
*१२. अन्तिके वर्तमानः,*
सा०- ८।१८।१९
*१३. गर्भरूपेण अन्तर्वर्तमानाम्,*
सा०मु०- १।१०४।६
*१४. आसन्नम्,*
सा०मु०- १।१०।९
*१५. मार्गे,*
सा०- १०।३३।१
*१६. अहंप्रत्ययगम्यादतिरिक्तं सर्व-वेदान्तवेद्यमीश्वरतत्त्वम् ,*
सा०- १०।८२।७
*१७. महान् विशेषो जात इत्यर्थः,*
उ०- १०।८२।७
*१८. अन्तर्हृदये अस्तीति विश्वकर्माणाम्,*
वे०- १०।८२।७
*१९. अभिभावकान्,*
सा०- ३।१८।२
*२०. छिद्रप्रवेशनपरान्,*
वे०- ३।१८।२
*२१. हिंसकस्य,*
वे०- ६।१५।३
*२२. शराणां निवारकम्,*
सा०- ६।७५।१९

अन्तरा

*१. मध्ये वर्तमानः,*
वे०- ३।४०।९
*२. तयोर्मध्यदेशे,*
सा०- ३।४०।९
*३. अन्तरालम्,*
सा०- १०।१३९।२

अन्तरिक्ष

*१. अन्तरिक्षलोकः,*
उ०- १०।४४।८ (अनालम्बानपि अन्त-रिक्षलोकान्) स्क० - १।२५।७ (पांसु-वर्जितेनान्तरिक्षेण) सा० - ६।५२।१३, सा०मु०- १। ४८।१२
*२. आकाशम्,*
उ०-१०।५।५, ८०।५, सा०- ३।२२।२, ८।३।२०
*३. अन्तरिक्षदेवता,*
सा०- १०।५३।५, ५९।७
*४. अन्तरिक्षलोकस्य मध्यमस्थानस्य संबन्धिभ्यः,*
सा०मु०- १।११०।६
*५. आकाशमार्गः,*
सा०मु०- १।२५।७, सा०- ८।७।३५ (आकाशमार्गेण), ९।६५।१६, १०।८७।६
*६. नभः,*
सा०- ६।५८।३, १०।१६८।३
*७. मध्यमस्थानम्,*
सा०- १०।१५३।३, १५८।१,
*८. गन्धर्वादिभिः सेविते मध्यमे लोके,*
सा०- ८।९।२
*९. अन्तरिक्षोपलक्षितानि लोकत्रय-स्थानानि,*
स्क०सा०- १।३५।७

*१०. दशापवित्रे,*
सा०- ९।२७।६
*११. द्यावापृथिव्योर्मध्ये वर्तमानादन्तरिक्षलोकात्,*
सा०मु०- १।६१।९
*१२. अन्तरा द्यावापृथिव्योर्मध्ये ईक्ष्यमाणं व्योम -*
सा०मु०- १।८९।१०
*१३. अन्तरा क्षान्तम्,*
सा०- ४।५३।५। (अन्तरा क्षान्तं भवति जगदित्यन्तरिक्षम्), ६।६१।११ (अन्तरा क्षान्तं नमः), ८।६।१५ (अन्तरा क्षान्तानि द्यावापृथिव्योर्मध्ये वर्तमानाः लोकाः), ८।३ (अन्तरा क्षान्तान् मध्यमाल्लोकात्), १२।२४। (अन्तरा क्षान्तानि द्यावापृथिव्योर्वर्तमानानि गन्धर्वादीनां स्थानानि), १०।१४९।१ (अन्तरा क्षान्तं मध्यमस्थानगतम्), सा०मु० - १।५२।१३ (अन्तरा क्षान्तं द्यावापृथिव्योर्मध्ये वर्तमानमाकाशम्)
*१४. द्यावापृथिव्योरन्तरा मध्ये क्षियन्ति निवसन्तीत्यन्तरिक्षाणि मध्यस्थितानि,*
सा०- १०।६५।४, ६६।११ (द्यावापृथिव्योरन्तरा मध्ये क्षितमुषितम्)

**अन्तरिक्ष-प्रा**

*१. अन्तरिक्षस्य पूरयिताम्,*
वे०- १।५१।२, ७।४५।१, ९।८६।१४
*२. स्वबलेनान्तरिक्षस्य पूरयितारम्,*
स्क०- १।५१।२
*३. तेजसान्तरिक्षस्य पूरयित्री,*
वे०- १०।९५।१७। सा०- १०।९५।१७ (स्वेतेजसान्तरिक्षस्य पूरयित्रीम्)
*४. स्वकीयेन तेजसान्तरिक्षस्य पूरयिता,*
सा०- ७।४५।१
*५. अन्तरिक्षस्य पूरकः उदकेन तादृशः सोमः,*
सा०- ९।८६।१४
*६. अन्तरिक्षं द्युलोकं स्वतेजसा प्राति पूरयति इति अन्तरिक्षप्रा,*
सा०मु०- १।५१।२

**अन्तरिक्ष-प्रुत**

*१. अन्तरिक्षगामिनीभिः,*
स्क०- १।११६।३
*२. अन्तरिक्षेण गच्छन्तीभिः,*
वे०- १।११६।३
*३. अतिस्वच्छत्वादन्तरिक्षे जलस्य उपरिष्टादेव गन्त्रीभिः,*
सा०मु०- १।११६।३

**अन्तरिक्ष-सद्**

*अन्तरिक्षसंचारी,*
सा०- ४।४०।५

**अन्तरिक्ष्य**

*१. अन्तरिक्षे भवानि,*
सा०- ९।३६।५
*२. अन्तरिक्षे जातानि,*
सा०- ९।६४।६

**अन्तस्-पथ**

*दरीसुषिरादिमार्गाः,*
सा०मु०- ५।५२।१०

**अन्ति**

*१. अन्तिके,*
स्क०वे०- १।७९।११, ९४।९, वे०- १।८४।१७, ४।२।१८, ४।३, ५।७६।२, वे०सा०- १।१६७। ९, १७६।१, ८। ११।४, ९।१९।७, ६७।२१, वे०सा०मु०-५।४४।११, सा०- ८।७३।१
*२. अन्ततः,*
वे०- १।८९।९

*३. अन्तिके समीपे,*
सा०- २।२७।३, ५।७६।२, (घर्मसमीपे) ९।९१।४, सा०मु०- १।७९।११, ८४।१७, ८९।९ (मनुष्याणां समीपे)
*४. समीपे ,*
वे०सा०- ४।५।१०, सा०- ४।२।१८ (पर्वतस्य समीपे। ...मदन्तिके) ४।३, (अस्माकं समीपे)
*५. समीप देशे,*
सा०मु०-१।९४।९
*६. आसन्ने,*
वे०- ८।७३।१
*७. सन्निकृष्टस्थम्*
स्क०- १।८४।१७, ८९।९ (सन्निकृष्टम्। अल्पम्)

**अन्तिक, का**

*निकटम्,*
सा०- १०।१६१।२

**अन्तिगृह**

*१. श्वसुरात् पतिगृहस्यान्तिके यस्य श्वसुरस्य गृहम् तस्माच्छ्वशुराद् आत्मीयं गृहम्,*
वे०- १०।९५।४
*२. स्वभर्तृभोगगृहान्तिके यत् श्वसुरस्य भोजनगृहं तदन्तिगृहम्,*
सा०- १०।९५।४

**अन्तितस्**

*१. आऽन्ताद् यावदवकाशम्,*
वे०- १।१७९।५
*२. अन्तिकतः,*
वे० - ३।५९।२, सा० - ५।१।१० (अन्तिकात्), ८।२७।९ (अन्तिकदेशाद्)
*३. अन्ताद्,*
वे०- ४।१।१०
*४. समीपात्,*
वे०- २।२७।१३, सा०-१०।११४।४ (समीपे। अन्तिकशब्दात्तसिः। अन्तिकस्य तसि कादिलोपो भवत्याद्युदातत्त्वं च)
*५. अन्तिकात् समीपदेशात्,*
सा०- २।२७।१३, ३।५९।२ (समीपात्)

**अन्ति-देव**

*१. अन्तिकस्थदेवं स्तोतारम्,*
वे०- १।१८०।७
*२. देवानामन्तिके,*
सा०- १।१८०।७

**अन्ति-वामा**

*१. सन्निकृष्टधना,*
वे०- ७।७७।४
*२. अन्ति अस्मदन्तिके वामं वननीयं धनं यस्याः सा अन्तिवामा,*
सा०- ७।७७।४

**अन्त्यूति**

*१. अन्तिके यस्य रक्षा भवति,*
वे०- १।१३८।१
*२. आसन्नरक्षणम् ...स्तुत्यनन्तरमेव वरप्रदमित्यर्थः,*
सा०- १।१३८।१

**आन्त्र**

*१. पुरीतन्ति,*
सा०- ४।१८।१३
*२. पुरीतदन्नपानयोराधानभूतम्। तत्संबन्धिभ्यः स्नायुभ्यः,*
सा०- १०।१६३।३

**अन्ध, न्धा**

*१. चक्षुर्विकलस्य,*
उ०सा०- १०।३९।३
*२. ऋजाश्वम्,*
स्क०- १।११२।८, वे०- ४।३०।१९

*३. अन्धीभूतम्,*
वे०- १।१४७।३
*४. चक्षुर्हीनम्,*
सा०- ४।३०।१९
*५. दृष्टिहीनम्,*
सा०मु०- १।११६।१६, ११७।१७
*६. दृष्टिरहितं सन्तमृजाश्वमृषिम्,*
सा०मु०- १।११२।८ (दृष्टिहीनाय तस्मै ऋजाश्वाय), ११७।१८
*७. चक्षुर्हीनं दीर्घतमसम्,*
उ०- १०।५५।११। (चक्षुर्विकलमृषिं दीर्घतमसम्), सा०- ४।४।१३, १०।२५। ११ (नेत्रहीनं दीर्घतमसमृषिम्)
*८. दर्शनहीनामचेतनाम्,*
सा०- १०।२७।११
*९. मम दुहितरं प्रकृत्याख्यां मय्येव लीनाम्,*
उ०- १०।२७।११
*१०. आध्यानरहिते चित्तव्यामोहकरेऽपि संग्रामे,*
सा०मु०- १।१००।८
*११. ज्ञानशक्तिरहिताः अविद्वांसः,*
सा०- १।१४८।५
*१२. अतथारूप; स्थूलदृष्टिः,*
सा०- १।१६४।१६
*१३. अन्धकाररूपाणि निबिडानि,*
सा०- ४।१६।४
*१४. अन्धीकरणानि,*
वे०- ४।१६।४
*१५. सोमलक्षणम्,*
वे०- ७।८८।२, सा०- ७।८८।२ (सोमलक्षणमन्नम्)

**अन्धस**

*१. तमोऽत्रान्ध उच्यते,*
स्क०- १।९४।७
*२. अन्धकारम्,*
वे०सा०मु०- १।६२।५
*३. बहुलमन्धकारम्,*
सा०मु०- १।९४।७
*४. अन्ननाम,*
उ०वे०सा०- १०।५०।७, स्क० १।२८।७, ६२।३, (चरुपुरोडाशलक्षणान्यन्नानि ... हवींषि), ६।६३।३, स्क०वे०सा०- १।५२।३, स्क०वे० सा०मु०- १।९।१, वे०- १।२८।७, २।१४।१, ३।४१।६, ५।४१।३, ५४।८, ६।६८।११, ८।१३। १५, ९५।२, ९।६७।२, ६८।६, १०७।२ (सक्तुभिः), १०।३२।१, वे०सा०- ८।७८।१, ९।१६।२ (श्रयणान्नेन) १८।२, ५१।३, ५२।१, ६२।५, १०।९४।८, ११५।३, १४४।५, सा०- १।१२२।१ (अन्नम् आज्यसोमादिलक्षण), २।१९।१, ४।३२।१४, ७।७३।४, ९२।१, ९।११।४ (धानाद्यन्नेन), ५५।१, २,३, १०७।२ (सक्तुलक्षणेनान्नेन), सा०मु०- १।२८। ७ (चणकादीनि खाद्यानि) १।८०।६
*५. सोमः,*
वे०- १।५२।५, ८०।६, ८२।६, १३५। ४, २।३६।३, ३७।१, ४।१६।१, ७।५९।५, ९०।१, ९२।१, ८।१।२५, १३।२१, १७।४, ८, ९२।१, ४, वे०सा०- ५।३४।२, ६।४५।२७, ६३। २,३, ७।२०।४, ८।३३।४, ७, ३५।२४, ४६।१४, ६१।३, ६६।२, सा०- ४।२०।४, ३२।१४, ३०।६,
*६. सोमलक्षण अन्नम्,*
उ०- १०।२५।१ (सोमाख्यस्यान्नस्य), ७६।६ (सोमाख्यस्य अन्नस्य), स्क०- १।८०।६, ६।४३।४, ४५।२७ (अन्नेन सोमाख्येन) ६३।२, ६८।११, स्क०वे०

सा०मु०- १।५२।२, स्क०सा०- ६।४२। ४, स्क०सा०मु०- १।५२।५, ८२।५, ८५।६, वे०- १।१५५।१ (सोमाख्यस्य अन्नस्य), ५।५१।५ (सोममन्तम्), ६।४२।४ (सोमन्नस्य) (सोमस्य अवयवेन येन सोमान्नेन), ७।७३।४ (सोमान्नस्य), वे०सा०- ३।३५।१, सा०- १।१३५।४ (अन्नस्य सोमरूपस्य), १५५।१ (सोम-रूपमन्नम्) २।१४।१, ३६।३,३७।१ (देवानामन्नरूपस्य सोमस्य), ३।४०।१ (अन्नलक्षणं सोमम), ४।१६।१ (अन्नरूपं सोमम्), २३।१, २७।५, ६।४३।४, ७।२१।१ (सोमरूपमन्नम्), ६८।२, ९०। १ (अन्नस्य सोमलक्षणस्य स्वकीयं भागम्), ८।१।२५ (अन्नस्य सोमरूपस्य) २।१, १३।१५, १३।२१ (अन्नस्य सोमलक्षणस्य स्वांशम्), १७।४ (अन्नस्य सोमलक्षणस्य स्वांशलक्षणं भागम्), १७।८ (अन्नस्य सोमात्मकस्य), २४।१६, ८८।१,९२।१, ४, ९।५८।१ (देवानामन्नात्मकस्य सोमस्य), ६८।६, १०।९६।९ (अन्नं सोमम्), ११६।४, १६७।२ (अन्नं सोमम्), सा०मु०- ५।३०।६, ५१।५ (अन्नं सोमलक्षणम्)

*७. सोमस्य रसः,*

वे०- ४।१।१९ (रसम्), ८।२४।१६, ९।१।४ (रसात्मकेन अन्नेन), वे०सा०- ९।६१।१० (रसम्), १०।७६।६, सा०- ४।१।१९ (रसाख्यमन्नम्), ३१।२ ९।८६।४४ (अन्नं रसात्मकम्), १०।३२।१ (अन्नरूपस्य सोमस्य रसमिति शेषः)

*८. उभयविधं दिव्यं पार्थिवं चाग्निम्,*

सा०- ७।९६।२

*९. ग्रामारण्यम्,*

सा०- ७।९६।२

*१०. धारया,*

वे०- ९।५५।१, ३

*११. सारेण,*

सा०मु०- ५।५४।८

*१२. हविर्लक्षणान्यन्नानि,*

वे०- ८।९५।२ (हविः), ९।५५।२, सा०- २।१४।४, ३।४८।१ (हवि-र्लक्षणस्य अन्नस्य सोमस्य), ५।४१।३ (अन्नानि हर्विलक्षणानि हवींषि स्तोत्रंच) ७।५९।५ (सोमलक्षणानि हवींषि), ९।६७।२ (हवीरूपेणान्नेन), सा०मु०- ५।४५।९ (दीयमानं छविः), मु०- ४।४१।३ (अन्नानि, हवींषि स्तोत्रं चेत्यर्थः हविषः)

*१३. अन्धोऽन्नम् तेन तत्कारणमुदकं लक्ष्यते,*

सा० ८।६५।२

*१४. अद्यमानम्,*

वे०- २।१९।१, १०।२५।१ वे०सा०- ८।३२।२८,

*१५. अदनीयम्,*

वे०- ४।२७।५, वे०सा०- ९।६१।१९, १०१।१ (अदनीयस्य सोमस्य), १०१। १३ (अदनीयस्य सोमस्य), सा०- १।१५३।४ (अदनीयमन्नं पयोरूपं पुरोडाशादिरूपं वा)

*१६. पयोलक्षणमन्नम्,*

वे०- १।१५३।४

**अन्य, न्या**

*१. एकः,*

उ०- १०।१४।३, स्क० ६।५२।१६, ६८।३, स्क०वे०सा०-६।५७।२ (अनयोरेकतरः इन्द्रः), वे०- ६।६६।१, वे०सा०- १।१६४। २०, २।४०।४, ७।८२।६ सा०- १।१८१।

४, २।४०।५ ३।३२।११ (एकतरया), ३३।२ (एका), ६।४७।२१, ५७।३, ५८। १, ७।८२।२, ५, ८३।९, ८५।३, १०। १३७।२, सा०मु०- १।१०३।१,५।२९।१०

*२. व्यतिरिक्तम्,*

वे०- ३।३५।५, सा०- २।१८।३, ३३। ११, ५।१।८, ७।५७।३ ८।५।१३, ८।८, १०।२८।१, ३४।११, १४९।३, सा०मु०- १।५२।१४ (स्वव्यतिरिक्तम्) १।१०९।६

*३. अतिरिक्तम्,*

सा०- १०।९१।८

*४. कश्चित् ,*

उ०-१०।१०।१४, ६४।२, उ०सा०- १०।१०।१३, स्क०-१।१०९।६, ६।४८। २२, स्क०वे०सा०मु०- १।५२।१३, (नान्यः कश्चिदतिरिच्यते), वे०- ६।२१। १०, ३०।४, वे०सा०- ८।१५।११, सा०-१०।३४।१४, सा०मु०- १।५७।४, ८४।१९, १०९।१ (केनचित्)

*५. अपरः,*

सा०- १।१६४।२० १८१।४, (अपरः उत्तमस्थानः), २।४०।४, ५, ३।३३।२ (अपरा), ६।४७।२१। (अपरम्)

*६. आगामिनीभिः उषोभिः,*

सा० - १।१२३।११ (अतीताः आगा- मिन्यश्च), सा०मु०- १।११३।१०

*७. समानः,*

सा०- ४।३६।९ (अस्मत् समानान्) ५।१।९ (स्वसमानान्)

*८. इतरान् अन्यदीयान्,*

सा०- ७।१।१४

*९. कार्यान्तरेषु,*

सा०मु०- १।३०।६

*१०. पूर्वमविद्यमानं तेजोमयम्,*

सा०- १।१४०।७

*११. तेभ्योऽन्यो यः कोऽपि पुरुषः, अन्यो यः कश्चन पापदेवः,*

सा०- १।१२५।७

*१२. केचन वेदवादिनः,*

सा०- १।१६४।१२

*१३. युवयोरन्यतमस्य,*

सा०- १।१८१।५

*१४. परस्परव्यतिहारेण,*

सा०- ६।४७।१५

*१५. प्रकृतादस्मद्विलक्षणाः दश- संख्याकाः,*

सा० ८।३।२३

*१६. अहंप्रत्ययगम्यादतिरिक्तम् सर्व- वेदान्तवेद्यमीश्वरतत्त्वम्,*

सा०- १०।८२।७

*१७. मरुद्व्यतिरिक्ता देवाः,*

सा०- ७।५७।३

*१८. त्वत्सदृशेन,*

सा०- १०।१०।८

*१९. त्वदनुरूपेण,*

उ०- १०।१०।८

*२०. त्वद्योग्येन पुरुषेण,*

उ०- १०।१०।१२ (अन्यतरेण त्वद्योग्येन पुरुषेण) सा०- १०।१०।१२

## अन्यक

*१. शत्रवः,*

सा०- ८।३९।१

*२. दुर्धियः शत्रवः,*

सा०- ८।४१।२

*३. कुत्सितानामन्येषां शत्रूणाम्,*

सा०- १०।१३३।१

*४. अन्ये ,*

वे०- १०।१३३।१ (अन्येषाम्), सा०- ८।२१।१८

अन्य-कृत

*१. अन्येन कृतम्,*
स्क०वे०- ६।५१।७
*२. अन्यप्रयुक्तेन धनेन,*
वे०- २।२८।९
*३. शत्रुकृतेभ्यः,*
वे०सा०- ८।७९।३
*४. अन्यैः शत्रुभिः कृतमुत्पादितम्,*
सा०- ६।५१।७
*५. अन्यैः अर्जितेन धनेन,*
सा०- २।२८।९

अन्य-जात

*अनौरसम्,*
सा०- ७।४।७

अन्य-तस्

*अन्यस्मात्,*
सा०मु०- १।४।५

अन्यथा

*१. अन्येनैव प्रकारेण,*
सा०- ६।३५।५
*२. प्रकारान्तरेण,*
सा०- ४।३२।८

अन्य-रूप, पा

*१. जीर्णा दावभूतः,*
वे०- १०।११।४
*२. रूपान्तरमेव धारयन्,*
सा०- ७।१००।६
*३. जीर्णा ओषधीर्दावभूतः,*
सा०- १०।१।४

अन्य-व्रत

*१. इन्द्रादन्यं यो यजते सोऽन्यव्रतः,*
वे०- ८।७०।११
*२. व्यतिरिक्तकर्माणम्,*
सा०- ८।७०।११
*३. श्रुतिस्मृतिव्यतिरिक्तकर्मा,*
सा०- १०।२२।८
*४. श्रुतिस्मृतिविहितकर्मणोऽन्यकर्मा, प्रतिषिद्धकर्मा,*
उ०- १०।२२।८
*५. विजातीयकर्मा,*
वे०- १०।२२।८
*६. अवैदिकस्य असुरस्य,*
मु०- ५।२०।२
*७. यस्य यजमानस्य प्रमादाद् व्रताद् अन्यद् असत्यादिकम् उपनतं सोऽन्य-व्रतः,*
वे०- ५।२०।२
*८. अन्यद्वैदिकाद्विभक्तं व्रतं कर्म यस्य तस्यासुरस्य,*
सा०- ५।२०।२

अन्योदर्य

*अन्यस्य उदराज्जातः,*
वे०- ७।४।८

अन्वञ्च

*१. पृष्ठतश्चानुमुखमागच्छतः,*
वे०- ३।३०।६
*२. अनुगच्छतः पार्ष्णिग्राहानसुरान्,*
सा०- ३।३०।६

अनूची

*१. परस्परेणानुगते। परस्परतः संवर्तिन्यौ सम्बद्धे चेत्यर्थः,*
स्क०- १।११३।२
*२. द्योतमाने अन्योन्यस्य,*
वे०- १।११३।२
*३. सूर्यगत्यनुसारेण गच्छन्त्यौ,*
सा० १।११३।२

४. अन्वञ्चन्त्यौ प्रथमं रात्रिः पश्चादुषा इत्यनेन क्रमेण गच्छन्त्यौ,
सा०मु०- १।११३।२

**अनूचीना**

अनुक्रमयुक्तानि। पितृपुत्रपौत्रा इत्यनुक्रमः,
सा०- ४।५४

**अन्वव्**

१. अनु अरक्षन्,
वे०- ८।७।२४।१०।११३।१
२. अरक्षन्,
सा० ८।७।२४, १०।११३।१ (रक्षतां। तस्य बलं पूर्वमस्मान्रक्षतु पश्चादेते अपि रक्षतामिति, भावः)
३. अनुगच्छसि,
सा०- ३।५०।२
४. गच्छसि,
वे०- ३।५०।२

**अन्वश्**

१. अनुव्याप्नोति,
वे०-१।८४।६ (अनु...गच्छन्तं व्याप्नोति)
सा०- ७।९९।१
२. व्याप्नोति,
वे० - ७।९९।१ सा० - २।१६।३ (व्याप्नोति परिभवितुम्)
३. अनु प्राप्नुवन्ति,
स्क०- १।५२।१४
४. प्राप्तुमसमर्थे बभूवतुः,
सा०मु०- १।५२।१४
५. अनुलक्ष्य ... प्राप,
सा०मु०- १।८४।६
६. अनुशब्दोऽत्र 'उपोऽधिके च' (पा० १, ४, ८७) इत्यनेन कर्मप्रवचनीयेन समानार्थ आधिक्यवचनः। आनशे व्याप्तिकर्मायम्, (तु० निघ २,१८)... व्याप्नोति,
स्क०- १।८४।६

**अन्वस्**

१. अनुगताः,
उ०सा०- १०।२७।१७
२. प्रति निक्षिप्ताः,
वे०- १०।२७।१७
३. अनुभवतु,
वे०- ३।३९।८, वे०सा०-१।१६७।१०, १८५।४, सा०- १।१८२।८
४. अनुकूलं भवतु,
सा०- १।१६७।१०, १८२।८
५. अभिमतप्रदः भवतु,
सा०- १।१६७।१०

**अन्वा √लभ्**

१. अन्वारभन्ते,
वे०- १०।१३०।७७
२. अनुक्रमेण आरब्धवन्तः। यागानुष्ठाने प्रवृत्ताः,
सा०- १०।१३०।७

**अन्वा √वह**

१. लब्धः, ...वहनद्वारेण संसेविता,
उ०- १०।२९।२
२. आवहत्। प्रापितवान्। लब्धवान्,
सा०- १०।२९।२

**अन्वा √वृत्**

अनुक्रमेण परिभ्रमति,
सा०मु०- ५।६२।२

**अन्वि (अनु √इ)**

१. अनुगच्छति,
उ०सा०-१०।१३।३ (अनुगच्छामि। यथाकालं प्रयुनज्मीत्यर्थः), उ०वे०सा०-१०।

६।७, स्क०- ६।५४।५ (अनुगच्छतु रक्षणार्थम्), स्क०वे०मु०-५।११३।८, वे०- ४।२६।२, ५।३०।२ (अनुगतवानस्मि), ८०।४, १०।१३।३, वे० सा०- ४।१३।२, ७।६३।५, ८।९९।६, १०।२७।१३, ५३।६, १३६।२, १४२।५, ९५।५, सा०- १।११३।८ (अनुगच्छति। अतीता उषसो यथा व्युष्टा एवमेवैषापि व्युच्छतीत्यर्थः), ६।५४।५ (रक्षणार्थमनुगच्छतु), सा०मु०- ५।३४।१,३०।२

*२. अनुक्रमेण ...गच्छति,*
सा०- १।१२४।३, मु०- ५।८०।४

*३. अनुसृत्य ...सखिभावं गच्छन्ति,*
सा०- १।१६३।८

*४. गताः,*
वे०- १।१६३।८

*५. गच्छन्ति,*
सा०- १।१६३।१२

*६. आनुपूर्व्येण गच्छति ... तिर्यगूर्ध्वमधश्च सर्वरश्मिजालेनाऽऽलोककरणाय व्याप्नोतीत्यर्थः,*
उ०- १०।२७।१३

*७. प्राप्तम्,*
सा०- ४।४।११

*८. प्राप्नुवन्ति,*
सा०- १०।८५।३१

*९. अनुप्राप्नोति,*
सा०मु०- ५।३४।१

**अन्वेतवे**

*अन्वेतुम्,*
वे०सा०- ७।३३।८

**अन्वेतवै**

*१. अविच्छेदनानुष्ठातुम्,*
वे०- ७।४४।५

*२. अनुगन्तुं प्रवृत्तानाम्,*
सा०- ७।४४।५

*३. अनुक्रमेण उदयास्तमयौ गन्तुमेव,*
सा०- १।२४।८, मु०- १।२४।८ (अनुक्रमेण उदयास्तं गन्तुमेव)

*४. आनुपूर्वेण गन्तुम्,*
स्क०- १।२४।८

*५. सूर्यस्य पदानि प्रतिधातुम्,*
वे०- १।२४।८

**अन्वृ**

*१. अनु गच्छति,*
वे०- ५।५२।६

*२. अनु ...निरगात्,*
सा०मु०- ५।५२।६

**अन्वर्तितृ**

*१. अनुगन्तारौ,*
वे०- १०।१०९।२

*२. ऋतिः सौत्रो धातुर्घृणायां वर्तते। तस्य तृचि रूपम्। सोममनुमोदयिता,*
सा०- १०।१०९।२

**अन्वृध्**

*१. अनुपूर्वो गमनार्थो भवति,*
वे०- ८।४८।२

*२. अनुगच्छसि...प्रापय। अनुपूर्व ऋधिर्गत्यर्थः,*
सा०- ८।४८।२

**अन्वृधत्**

*१. अनुक्रमेण ...वर्धयन्तः,*
वे०- ७।८७।७

*२. आनुपूर्व्येणर्धतः समर्धयन्तः,*
सा०- ७।८७।७

**√अप्**

*१. व्याप्नुवन् ,*
वे० - १।८०।८

२. स्तुतिभिर्दीपयन्ति। उत्तेजयन्तीत्यर्थः,
स्क० - १।१००।८
३. आप्नुवन्ति,
सा०मु० - १।१००।८

अप्तुर्

१. अप्छब्दः उदकवचनः । अन्तर्णीतण्यर्थस्य तरतेरप्तुरः। अपां तारयितारः आदित्यं प्रति गमयितारः,
स्क० - १।३।८
२. मेघस्थानमपामुद्गमयितारः,
वे० - १।३।८
३. तत्काले वृष्टिप्रदाः,
सा० मु० - १।३।८
४. आप इव त्वरोपेता,
सा०मु० - १।११८।४
५. आपोऽन्तरिक्षम् । तत्र त्वरितारः त्वारयितारो वा मेघस्य,
स्क० - १।११८।४
६. आपः उदकानि, तत्र त्वरितारः,
स्क० - १।११८।४
७. उदकस्य प्रेरयितारः,
वे० - १।११८।४
८. अपां प्रेरकः,
वे०-२।२१।५ (अपां प्रेरयितुः), ३।२७।११, वे०सा०-९।६३।२१, सा०-२।२१।५, ३।२७।११, ५१।२ (मेघ-भेदनद्वारा अपां प्रेरकम्)
९. उदकस्य प्रेरकः,
वे०सा० - ९।६३।५, सा० - ९।१०८।७ (अन्तरिक्षस्थितानमुदकानां प्रेरकम्)
१०. व्यापनशीलम्,
वे० - ३।२७।११
११. कर्मसु त्वरमाणम्,
वे० - ३।५१।२
१२. वसतीवरीभिः प्रेरितम्,
वे०सा० - ९।६१।१३

अप्सस्

१. दर्शनीयो गजः इव,
सा० - ८।४५।५
२. गजः,
वे० - ८।४५।५
३. रूपम्,
वे०सा०मु० - ५।८०।६
४. दन्तस्थानीयानि रूपाणि नीलपीतादीनि,
सा० - १।१२४।७
५. निरूप्यमाणानि पदार्थजातानि,
सा० - १।१२४।७
६. आत्मीयं रूपम्,
वे० - १।१२४।७

अप्, आप्

१. उदकम्,
उ०सा०- १०।९।५, ६६।९, ८९।४, स्क०- ६।४८।५, ६२।६, स्क०वे० - ६। ७२।३, स्क०वे०सा०- ६।६८।८, स्क० सा०- ६।३०।४,६४।१, स्क०सा०मु०- १।५२।६, वे०-१।८।७, २३।२०, २३।२३, ५५।६, ६४।१, ८०।५, ९१।२२, १००। १८, १०४।६, १०५।१, ११२।५, १२२। ६, १५१।१, १५७।५, २।२७।१३, ४।१६। ६-८, ५।४८।१, ६।२४।६, ३०।५, ३१।१, ४७।१४, ७३।३, ७।३२।२७, ६५।३, ९५।१, १०४।, ८।६।१३, ७।२८, १२।३, ३३।१, ४०।१०,११, ८६।२५, ७६।३, ९।६८।४, ७१।३, ८०।५, ८२।५, ८५।४,१०, ८६।४०, ९४।१, ९६।१०, १३, १०९।२२ १०।१४।९, ३०।४, ५०।२, ६४।८, १२४।७, १२५।७, १३८।१,

१४२।७, वे०सा० – १।१६१।११, १६८।२, १७५।६, १८०।४, १९०।७, २। १४।२, २०।७, ६।२८।७, २९।५, ४९। १४, ४४।१८, ४६।४, २७, ७।६८।८, २१।३, ८।४।३, ३२।२, ८३।३, ९४।७, ९६।३, ९६।१८, ९७।१५, १०९।२१, ९।६२।२६, ६३।७, ७०।२, १०।४।५, ८९।१०, १३, ९२।५, ९८।१२, १०४।९, ५०।३, ६३।१५, ६५।७, ६६।८, ११३।६, १४७।७, १४८।२, वे०सा०मु०– १।८०।३, ५।३१।६,८, ५३।१४, ६०।३, सा०– १।२३।१९, १४४।२, १६१।९, १६४।४७, २।१३।१, ३५।५, ३।३९।६, ४।१८।६, २१।८, २६।२, ३८।१०, ४७।२, ५८।११, ६।१३।१, १७।१२, १९।१२, २०।२, १२, २५।४, ३२।५, ६०।२, ७।१८।१२, ८।९।५, १५।२, ८, १६।२, १८।१६, २५।१४, ६९।११, ८२।३, ८८।३, १०१।२, १०३।४, ८।३।१०, ९।२।५, ४९।१, ७२।७, ७४।३, ८६।८, ८८।७, ९५।३, ९६।१९, ९७।४१, १०७।१८, १०८।५,१०, १०९।१३, १०।१७।१४, ४५।५, ४६।२, ५१।१३, ६५।११, १२१।९, १६८।३, सा०मु०– १।४६।४, ५१।४, ६५।५, १०८।११, १०९।४, ५।१४।४, ३०।६, ४६।७, ८५।२

***२. समुद्रनद्यात्मकान्युदकानि,***

उ० – १०।३९।४ (सामुद्रीभ्यः), ६३।१५ (उदकेषु सामुद्रनादेयादिषु), वे०सा० – ७।८९।४,१०।३९।४, सा०– १।१३१।४, २।१।१ (समुद्रोदकेभ्यः), ८।१४।१०

***३. ह्रदोदकात्,***

स्क० – १।११२।५

***४. प्रोक्षण्याद्युदकम्,***

स्क० – १।१६४।४

***५. कूपान्तर्वर्तमानम्,***

सा०मु०– १।११६।२४, ११७।४ (कूपस्थेपूदकेषु)

***६. अन्तरिक्षस्थितमुदकम्,***

वे०– २।१।१, सा०– ३।३२।५, ८।६।१६, ९।६८।४, १०।१२३।१

***७. वृत्रेणावृतान्युदकानि,***

सा०– ४।१७।३, १०।१३८।१, सा०मु०–५।२९।२ (वृत्रेण निरुद्धान्युदकानि)

***८. सर्वाण्युदकानि,***

वे०सा०मु० – ५।३०।५

***९. प्रभूतेनोदकेन,***

स्क० – ६।२९।५

***१०. पार्थिवान्युदकानि,***

स्क० – ६।३९।५

***११. महान्त्युदकानि,***

वे०सा० – ९।६१।२२

***१२. उदकानि शान्त्यर्थम्,***

सा० – १०।४।५

***१३. अभ्युक्षणोदम्,***

सा० – १०।१४।९

***१४. प्रकृतिस्थानां सूक्ष्माणामुदकानाम्,***

उ०सा० – १०।२७।१७

***१५. प्रवृद्धानामुदकानाम्,***

सा० – १०।७७।४

***१६. उदकानि अमृतलक्षणानि,***

स्क०– १।१०३।५, सा० –१०।१७८।३

***१७. वृष्ट्युदकम्, वृष्टिलक्षणोदकम्,***

उ० – ८।४३।७, ६५।७, ६६।८, ७८।५, उ०वे०–८।४६।१, उ०सा० – ८।४३।८, ४५।३, ३०।४, स्क०– १।१०४।६, ६४।६, ६।३१।१, ६०।२, स्क०सा० – ६।५७।४, स्क०सा०मु०– १।८०।४, ५, ९१।२२, १००।१८, १०३।२, ५२।८, ५४।१०, ५५।६, वे० – १।१३४।५, २।

३८।२, सा०- १।१२२।३, ६, १५७। ५, १६४।५२, १६५।८, १६९।३, १८१। १, २।१।१, २७।१३, ४।१६।६-८, २८।१, ६।६०।११, ७।१२।३, २२।२८, १०३।५, ८।६।१३, १०।८।१, ५, २७।२०, सा०मु०-१।१०३।५, ५।४८।१

***१८. वसतीवरी,***

उ०-१०।३६।८, उ०सा०- १०।३०।१, ३०।१५, स्क०- ६।३४।४, स्क०वे० सा०- ६।४०।२, वे०- १।१३५।६, १७८।२, ३।३५।८, १०।१०४।२, वे०सा०- २।३५।३, ६।४८।५, ८।१।१७, ९।२।३, ३।६, ७।२, २४।१, ३०।५, ५९।२, ६२।४, ५, ६५।२६, ६६।१३, ७८।१, ८९।२, ९१।२, ९६।२४, ९७।४५, ९७।४८, ९९।७, १०७।१, १०९।१७, सा०- १।१०७।२, ४, १८, सा०- ६।४७।१४, ९।६५।६, ६८।९, ७१।३, ७४।९, ७९।४, ८२।३, ५, ८५।१०, ९४।१, ९६।१०, ९३, ९७।४७, ९७।५७, १०९।२२, १०। १३९।४

***१९. मातृभूताभिः वसतीवरीभिः,***

सा० - ९।९३।२

***२०. तासामुदकानि सोमाभिषेकार्थम्,***

सा० - १०।६४।८

***२१. एकधना,***

उ०- १०।३०।२, उ०सा० (वसतीवर्ये-वधनाख्या) - १०।३०।३,१५, (वसती-वर्येकधनालक्षणानि) १०।३०।१, स्क०- ६।३४।४, ४०।२, सा० - १०।१०४।२, सा०- ६।६५।६, २६, ९६।१३,

***२२. मेघस्थोदकम्,***

उ०सा० - १०।३०।४, (वृष्टिलक्षणा), स्क० - ५।५८।६, ६।३२।५, ४७।१४ (उदकानि च मेघोदरान्तर्गतानि),२७ (मेघोदरान्तर्गतानाम्) सा० - ६।७२।३, ८।२६।२५, सा० - १०।५०।२, (मेघे वर्तमानेषूदकेषु), सा० - २।३५।७,८, सा०मु० - १।९५।८

***२३. जलम्,***

वे०- १।१५१।४, सा० - ३।२२।२, सा०मु०-१।८।७, २३।२०, २३, ३२।१, ५१।११, ५६।६, ६४।१, ६७।५

***२४. सलिलम्***

सा० - ८।४०।१०, ११

***२५. लवणोत्कटस्य सामुद्रजलस्य पानानर्हत्वात्,***

सा० - ७।८९।४

***२६. अन्तरिक्षम्,***

उ०सा० - १०।४५।१, ४९।२, उ०वे०सा०- १०।१०।४, १०।६३।२, ६५।९, स्क०वे०- ६।५२।१५, स्क०सा०मु०- १।९५।३, ९६। २, १८०।२, वे०- १।१६३।४, ३।५६।७, ५।३१।९, ४५।११, ५।७६।४, ६।६४।४, ७।८५।३, ८।७।२२, १५।२, ९।९०।४, १६।३, १०।१६८।३, वे०सा०- १। १८०।५, २।३८।७, ३।१३।४, ४।१३।४, ६।२२।८, ८।८२।८, ९।१६।३, २०।६, ९।४२।१, ७६।५, १०।३६।१, ६५।११, वे०सा०मु० - १।३६।८, ५२।१२, सा०- १।१७३।८, १८४।३, १५१।१, २।३८। ११, ६।२४।६, १०।२।७, ८८।२, ८, मु० - ६।८।४

***२७. अग्निमित्ताम्,***

सा० - ५।४५।११

***२८. आप्नोति सर्वं जगत् इत्यापः अन्तरिक्षम्। नित्यबहुवचनान्तत्वात् बहुवचनम्,***

सा० - ३।५६।७, ९।९९।६

*२९. अपां कारणादन्तरिक्षात्,*
सा०मु० – ५।७६।४
*३०. अन्तरिक्षमाकाशम्*
सा० – ६।६४।४
*३१. कर्म,*
उ०सा०– १०।७६।३, स्क० – ६।६२।२, वे०– ३।१।३, वे०सा० – २।२२।४, सा०– १।१३५।६, १५८।६, १८४।३, ३।१।५ (अपस्यतां कर्मवताम्)
*३२. यागकर्म,*
उ०– १०।३६।१, १०।६५।७ (कर्म... लौकिकं वैदिकञ्च), वे० – १०।७६।३ (कर्म यज्ञम्), ६।३२।५ (कर्म युद्धं यज्ञं वा), सा०–१।१५१।४ (कर्म सोमयगरूपम्) १७८।२ (अप्कार्याणि हवींषि), ३।१।३ (यज्ञवहनरूपे कर्माणि निमित्ते), १०।१२।४ (यज्ञरूपकर्म),
*३३. सोमः,*
स्क०– १।९५।८ (सोमरसलक्षणाभिश्चाद्भिः), वे०– १।१०९।४ (अभिषूयमाणे सोमे), वे०सा०– १।१२२।९, सा०– ७।७०।४, (अब्विकाराः) ७।८५।३ (सोमाः)
*३४. वेगः,*
वे०– १।५७।१, ६।६२।२ (वेगवतीनां नदीनां मध्ये), सा०मु० – १।५७।१ (जलानां वेगः)
*३५. देवता,*
सा०मु० – १।२३।१९, १०।६१।२६
*३६. आपः देव्यः,*
सा० – ७।४९।३, ४
*३७. अब्देवता,*
वे०सा०मु०–५।४६।३, सा०– ७।४७।१, २, ८।१९।४, सा०मु०– १।१०४।६, ५।४९।११

*३८. उदकदेवता,*
सा० – ७।४४।१
*३९. गर्भवदन्तर्वर्ती अपांनपात्संज्ञः,*
सा०मु० – १।७०।२,
*४०. वैद्युतात्मना ह्यग्निः अद्भ्यः उत्पद्यते। अतोऽपां गर्भ उच्यते,*
स्क०– १।७०।२
*४१. आप्तव्यः,*
सा० – १।१७८।१, (आप्तव्यानि। यद्वा। विश्वा सर्वा आपः आप्ताः श्रुतयः), ४। ३।१२ (आप्तव्याः सत्यः), ६।४४।१८ (आप्तव्यानां धनानां वा उदकानां वा)
*४२. आप्नुवन्तः,*
सा० – ६।६६।११, ७।५६।२४
*४३. व्याप्तः,*
वे०–६।६६।११, ७।५६।२४, ८।९६।१, १०।९२।५, ९५।१० सा०– ४।३८।४। (व्याप्तस्य स्तोतुः), ५।४४।६ (व्यापिकासु स्तुतिषु अप्सु)
*४४. 'आप्लृ व्याप्तौ'। सर्वतो व्याप्ताः,*
सा० – ८।९६।११
*४५. व्याप्तः कर्मसु कर्मवान् ,*
सा० – १०।९५।१०
*४६. व्यापनशीलासु धीवृत्तिषु,*
सा० – १०।१२५।७
*४७. सूर्यमण्डलस्थाः सर्वस्य व्याप्तारो वा रश्मयः,*
वे० – १०।३७।२
*४८. आन्तरिक्षासु उदकमये मण्डले,*
सा०मु० – १।१०५।१
*४९. त्रयो लोकाः,*
स्क० – १।६७।५
*५०. मातृभूता अपः,*
सा० – ३।९।२, १०।३२।६

५१. भूमिः,
सा०-१।१६३।४ (भूलोकोऽपि अप्-शब्देनाभिधीयते पृथिव्याम्) १।१७४।९
५२. प्राप्नोषि
सा० - १०।९५।१३, (आप्नोषि), वे०-१०।९५।१३
५३. तटीयदुर्गस्थानानि उदकाश्रयाणि तटाकादीन्,
सा० - १।१७४।२
५४. अब्रूपाः,
सा० - १०।१०४।८
५५. प्रधानभूताः नद्यः,
वे० - १०।१०४।८
५६. सर्वस्य पात्र्यः,
उ० - १०।६४।९
५७. अम्भांसि,
सा०मु० - ५।८३।६
५८. इन्द्रं प्राप्नुवतां पुरुषाणाम्,
सा०मु०- १।१००।११
५९. मेघोदरगता विद्युतात्मना स्थितं जनितवत्यः,
सा० - १०।२।७
६०. आज्यौषधिसोमरूपाः,
वे० - ७।१०१।४
६१. एतदुपलक्षितानि सर्वाण्यपि भूतानि,
सा० - २।२४।१२
६२. पयांसि,
उ० - १०।३६।१

अपां (नपात्)

१. मध्यमस्थानपठितोऽग्निरपां नपादिति,
वे० - २।३५।१
२. अपांनपान्नामधेयोऽपि देवः,
सा० - ७।३५।१३
३. एतदाख्यो देवः
सा० - ७।४७।२
४. वृष्टिकर्मण्यधिकृतं देवम्,
सा० - १०।३०।३
५. मध्यमास्थानोऽग्निः,
सा० - ६।५२।१४
६. मध्यमस्थानवैद्युताग्ने,
सा० - १०।१४९।२
७. रक्षकं वैद्युतमग्निम् ,
सा०मु० - ५।४१।१०
८. अपां पुत्रम्,
स्क० - १।२२।६
९. अपां पौत्रः,
स्क०-१।२२।६, वे०-२।३५।१३, ३।९।१
१०. अपां नप्तारम्,
सा० - ३।९।१
११. अपां न पातयिता वैद्युताग्निरूपेण प्रवर्षकत्वादिति भावः,
सा० - १।१४३।१
१२. उदकानामपातयितारं वर्षकमेतन्नामकम्,
सा० - १।१८६।५
१३. उदकानां नप्तारं तृतीयं पुत्रम्। अद्भ्यः ओषधिवनस्पतयः तेभ्योऽग्निरिति नप्तृत्वम्,
सा० - १।१८६।५
१४. अपां पौत्रीयस्थानीयोऽग्निः। अद्भ्यः ओषधिवनस्पतयो जायन्ते ओषधिवनस्पतिभ्यश्चायमग्निर्जायते इत्यग्नेरपां पौत्रत्वम्,
सा० - २।३१।६

*७. अमूढः। प्रगल्भः,*
सा०-४।६।२, ११।५
*८. अमूढबलः,*
सा०-१।१४१।१२
*९. अमूढचेतसः*
स्क०-१।७२।२
*१०. अमूढाः विविक्तप्रज्ञावन्तः,*
स्क०-१।६८।४

अमृक्त, क्ता

*१. दशापवित्रेण अमृष्टम्,*
सा०-२।३७।४
*२. दशापवित्रेणापरामृष्टम्,*
वे०-२।३७।४
*३. शत्रुभिरपरिमृष्टे,*
वे०-३।६।४, ११।६, ६।५०।७, ७।३७।१, ८।२।३१,
*४. अनाधृष्टा रक्षोभिः,*
वे०- ४।३।१२
*५. रक्षः प्रभृतिभिरबाधिताः,*
सा०-४।३।१२
*६. अन्यैरपरिबाध्यम्,*
सा०मु०-६।१।१४
*७. शत्रुभिरबाधितः,*
सा०-८।२।३१
*८. अहिंसितम्,*
वे०-६।१।१४, ७।३७।२, वे०सा०- ८।२४।९, १०।१०४।८, सा०-३।६।४, ११।६, ६।५०।७, ७।३७।१
*९. अहिंसितम्। चोरादिभिर्नापहृतम्,*
सा०-७।३७।२
*१०. अमृतसदृशम्। अत्यन्तहितम्,*
स्क०-६।५०।७
*११. अमृक्तम् अशुद्धम्,*
स्क०- ६।५०।७
*१२. अन्नेन धनेन सहितम्,*
स्क०-६।५०।७
*१३. अनिर्णिक्तेन,*
वे०सा०-९।६९।५

अमृत, ता

*१. देवः,*
उ०सा०-१०।३३।८, उ०वे०- १०।१०।३, ७४।३, स्क०-१।७२।१०, स्क०वे०सा०मु०- १।२४।१, वे०- १।५९।१, ७२।२, ११४।६, १८९।३, २।१।१४, ३।१।१८, २८।५, ४।१।१०, ४३।१ ५।४२।५, ६।१५।१०, १०।१७६।४, वे०सा०- १।१२७।८, २।२।९, ४।४२।१, ५।२।१२, ७।४।५, ५।१, ११।१, १०।३१।३, सा०- १।३८।४, ४।३५।८, १०।६६।५
*२. देवता,*
स्क०-१।३५।६, ९१।१८, वे०सा०मु०-१।३५।२, सा०-१।२४।१
*३. प्रजापत्यादयो देवाः,*
सा०-१०।१०।३
*४. यष्टव्यानां देवानाम्,*
सा०-१०।७४।३
*५. मरणवर्जितः,*
उ०-१०।६५।१४, १५, ६६।११३, ६९।९, स्क०- १।२६।९, ३५।२, ३८।४, ४४।५, ७०।२, ८३।५, ९०।३, ११३।१३, वे०-१।५८।१, ७।७५।३, सा०-१०।१६।८
*६. मरणधर्मरहितः,*
सा०-२।१०।१, २, ३।१४।७, २०।३, २१।१, २५।२, ३, २६।३, २८।५, २९।५, १३, ६१।३, ४।२।१, ९, ३।३, ८।२३।१९, ९।११३।७, १०।१७।२,

४५।७, ८, ६५।१४, १५, ६६।१, १३, ७०।११, ९१।११, सा०मु०- ६।५।५, ७।४

*७. मरणरहितः,*

उ०-१०।६६।५, १३, वे०सा०- ६।९।४, सा०-३।३।१, ४।१६।१४, ६।४।२, १५।१०, १६।२५, ४८।१, ५२।९, ७।४।४, १७।४, ३५।१५, ८।१।६, ८।१०१।६, ९।९७।३२, १०।१७।२। (मरणधर्मरहिताम्), सा०मु०-१।२६।९, ४३।९, ४४।५, ५८।१, ७७।१, ८३।५, ११३।२, १३, ११४।६

*८. अमरणधर्मा,*

उ०-१०।३०।१२, ४५।८, स्क०-१।४३।९, ५।५७।८, ६।४८।१, ७०।११, वे०- १।११३।२, ३।५।२, २९।१३, ६।४।२, ७।४।४, सा०-१।७२।६, १२३।१, १६६।३, १३, १८९।३, २।१।१४, ३।५।१३, ६१।३, ४।२।१, ५।६९।४, ७।३८।८, ८।७१।११, ९।९७।३२, १०।१३।१, सा०मु०-१।५९।१, ७२।२, ७२।१०, ९०।३, ५।४२।५, ५।७६।५

*९. अमरणम्,*

वे०-४।३।३, ५।१३, ५।५७।८, ७६।५, ९।९७।३२, वे०सा०-७।९७।५, ८।३१।९, वे०सा०मु०- ५।४२।१८, सा०-१।१२२।११, २।४०।१, ६।१५।६, ८, ८।४८।३, ७४।५, १०।१२२।५, १८६।३। सा०मु०-१।६८।२

*१०. अमरणस्वभावाः,*

सा०-४।५।२, सा०मु०- ५।५७।८

*११. अमरणाद्देवाद्देवनिमित्ताद्भयात्,*

सा०-१०।१७६।४

*१२. अमरणहेतवः,*

सा०-४।३।१२, ६।४४।१६ (अमरण-हेतुकम्), (अमरणहेतु, भूतानि), १०।१२३।४

*१३. अमरणशीलः,*

सा०-४।११।५, सा०मु०-५।३१।१३, ६।२१।१०

*१४. अमरणधर्मकस्य स्वर्गस्य,*

सा०-१।१७०।४, ४।३५।३

*१५. अमरणलक्षणः स्वर्गसाधनः,*

सा०- ४।४१।१

*१६. अमरणा अनश्वराः,*

सा०-७।७५।३

*१७. अमरणसाधनम्,*

वे०सा०मु०-५।५७।५, वे०-८।१३।१२, सा०-१०।१२३।४

*१८. अमरणहेतोरुदकस्य,*

सा०मु०-६।७।७

*१९. अमरणरूपं तज्जन्यफलम्,*

सा०-१०।३०।१२

*२०. अमरणं प्राणिनामवस्थानम्,*

सा०-१०।१२९।२

*२१. अमरणत्वाय,*

सा०मु०-१।९१।१८

*२२. उदकम्,*

स्क०- ६।४४।२३, वे०-१०।११।९, १२।३, १२३।३, १३९।६, वे०सा०-१।१८५।६, ३।१।१४, ९।७०।२, ४, ९४।२, १०८।४, सा०-७।५७।६, ९। ११०।४, सा०मु०-५।५८।१, ६।७।६

*२३. उदकस्य वृष्टिलक्षणस्य,*

स्क०-५।५८।१

*२४. पयः,*

वे०-१।७२।९, वे०सा०-८।१०१।१५

२५. *अमृतवत्स्वादुभूतं पयः,*
सा०-१।७१।९
२६. *पीयूषम्,*
सा०-६।४४।२३, सा०मु०-१।२३।१९
२७. *अन्नानि,*
वे०-१।७२।१, १२२।११, २।४०।१, ३।१७।४, २३।१, ५।२८।१, ७।५७।६
वे०सा०-७।४।६,
२८. *अन्नार्थम्,*
सा०-३।३४।२
२९. *क्षयरहितं प्रभूतमन्नम्,*
सा०-३।२३।१
३०. *अमरणसाधनमन्नम्,*
वे०-१।१५९।२
३१. *नित्याः,*
उ०-१०।४५।७, स्क०-१।६२।१०, ७२।१, सा०-३।१।१८, ४।११, ६।२१।३, ७।१६।१,
३२.*अमृतसदृशस्यात्यन्तमृष्टस्य हविषः,*
स्क०-१।१३।५
३३. *हविःस्थानीयमन्नम्,*
वे०-३।२६।७
३४. *हविः,*
वे०-५।२।३, ३।४, १०।२०।१०
३५. *देवानां हविः,*
उ०,१०।१२।३
३६. *हविलक्षणैरन्नैः,*
सा०-१०।२०।१०
३७. *अमृतसदृशस्य हविषः,*
सा०-१०।९३।४
३८. *अनश्वरम्,*
सा०-८।१३।१२
३९. *अमरणा अनश्वराः,*
सा०-७।७५।३
४०. *विनाशरहितम्,*
सा०-१०।९०।३
४१. *अविनाशी,*
सा०-५।२।३, ७।७६।१
४२. *अमारकमविनाशकम्,*
उ०सा०-१०।१३।४
४३. *अमृतत्वसाधनम्,*
सा०-५।२।३
४४. *देवान्नभूतायाः सुधायाः,*
सा०-३।१७।४
४५. *मरणं नास्त्यस्मिन्नित्यमृतं सुधा,*
सा०-१०।१२१।२
४६. *कर्मफलं दिव्यादिव्यविविध, विषयोपभोगात्मकम्,*
सा०-३।२६।७
४७. *घृतस्य,*
सा०मु०-१।१३।५
४८. *न विद्यते मृतं मरणम् अस्मिन्निति अमृतम्,*
सा०-१।१३।५
४९. *हिरण्यम्,*
सा०मु०-१।७२।१
५०. *पुनः पुनः करणेऽप्यालस्यरहिताः सत्यः,*
सा०मु०-१।१६२।१०
५१. *अग्लानाः,*
वे०-१।६२।१०
५२. *जरामरणरहितं स्थानम्,*
सा०-१।१२५।६
५३. *जरामरणवर्जिता,*
वे०-१।११३।१३
५४. *मरणवर्जिता,*
स्क०-१।११३।१३
५५. *मरणधर्मिषु,*
वे०-६।९।४

*५६. देवपानस्य मधुनः,*
उ०सा०-१०।११।९
*५७. द्युलोकस्य,*
वे०-६।७।६
*५८. मृष्टम्,*
स्क०-६।४४।१६
*५९. अमृतसदृशम्, अत्यन्तमृष्टम्,*
स्क०-५।५७।५
*६०. क्षयरहितम्,*
सा०-३।४३।५
*६१. मोक्षम्,*
सा०- ४।५८।१
*६२. सायुज्यतामोक्षपर्यन्तमित्यर्थः,*
सा०-७।५९।१२
*६३. जीवितम् अमृतम्,*
वे०-७।५९।१२
*६४.सूर्यस्य,*
सा०मु०-५।४७।२
*६५. अग्निः,*
स्क०-१।१३।५, स्क०सा०-१।२४।२
*६६. अमरणधर्माग्निः,*
सा०मु०-१।७०।२
*६७. सोमस्य,*
वे०-३।३८।४, सा०-१०।५३।१०, सा०मु०-१।११२।३
*६८. अमृतसदृशं मरणवर्जितं सोमाख्यमन्नम्,*
स्क०-६।३७।३
*६९. सरण्यूम्,*
उ० - १०।१७।२ (अमृतधर्माणं तां त्वष्टुर्दुहितरं सरण्यूम्, वे०-१०।१७।२, सा०- १०।१७।२ (मरणधर्मरहितामेता सरण्यूम्)
*७०. अप्सरस्सु,*
वे०सा०-१०।९५।१
*७१. अमरणशीलेन्द्रः,*
सा०मु०-५।३१।१३
*७२. अमर्त्यः,*
वे०-५।३१।१३
७३. सुकर्मा,
वे०- १।७०।२
७४. चन्द्रनक्षत्रादीनि ज्योतींषि,
सा०मु०-१।३५।६
*७५. देवाः,*
उ०सा०-१०।३३।८, स्क०-१।३५।६, वे०-१।७२।२, ३।१।१८
*७६. सर्वेऽमरणधर्माणो देवाः,*
सा०मु०-१।७२।२
*७७. अमृता अमूरा इत्यादिभिरङ्गिरसः उच्यन्ते न देवाः,*
स्क०-१।७२।२
*७८. देवता,*
स्क०-१।९१।१८

**अमृतत्व**

*१. देवत्वम्,*
स्क०-१।३१।७, स्क०सा०मु०-१।११०। ३, ४, वे०-३।६०।३, सा०-४।३३।४, १०।९०।२, सा०मु०-६।७।४,
*२. देवत्वप्राप्त्यर्थम्,*
सा०-३।३१।९,
*३. देवत्वममरणम्,*
सा०-९।९४।४, १०।६२।१ (अमरणधर्मं देवत्वम्) १०७।२, (अमरणधर्मत्वं देवत्वम्) १२४।२, (मरणधर्मराहित्यम् देवत्वम्)
*४. हविर्भक्षणलक्षणं देवत्वम्,*
स्क०-१।९७।६
*५. अमरणत्वसिद्धये,*
सा०मु०-१।७२।९

६. *स्वकीयामरणत्वम्,*
सा०मु०-१।९६।६
७. *अमरणरूपं पदम्,*
सा०-१।१६४।२३
८. *न म्रियन्ते,*
वे०-९।९४।४
९. *अमरणाय,*
सा०-९।१०८।३
१०. *अमरणधर्मम्,*
सा०-१०।६३।४
११. *मरणवर्जितत्वम्,*
उ०-१०।६३।४
१२. *अविनाशित्वम् ,*
सा०-१०।५२।५, ९२।३
१३. *मोक्षम्,*
सा०-४।५८।१
१४. *मोक्षे स्वर्ग इत्यर्थः,*
सा०मु०-५।५५।४
१५. *स्वर्गम्,*
सा०मु०-५।६३।२
१६. *उत्कृष्टे,*
वे०-१।३१।७, सा०मु०-१।३१।७, (उत्कृष्टमरणरहिते पदे),
१७. *संतत्यविच्छेदलक्षणम्,*
सा०-५।४।१०
१८. *अविद्यमानं मृतत्वं यस्य सोऽमृतत्वोऽग्निः,*
स्क०-१।७२।९

**अमृतबन्धु**

१. *अमरणबन्धना,*
वे०सा०-१०।७२।५
२. *अमृतत्वबन्धनाः अमृतोपजीविनः अमरणधर्माः,*
उ०-१०।७२।५

**अमृत्यु**

१. *मृत्युरहिता देवाः,*
सा०-३।२।९
२. *मृत्युरहिताः,*
वे०-३।२।९
३. *अमरणहेतु,*
सा०-६।४८।१२
४. *अमृत्युकारणभूतम्,*
सा०-६।४८।१२
५. *अमरणं तद्धेतु पयः,*
वे०-६।४८।१२
६. *मरणधर्मरहिताः,*
सा०-९।७०।३
७. *अमारकाः,*
वे०-९।७०।३
८. *अमारिताः,*
वे०सा०-१०।९४।११

**अमृध्र, ध्रा**

१. *अहिंस्यम्,*
स्क०सा०मु०-१।३७।११, वे०-९।८२।५
२. *अहिंसितारम्,*
स्क०-१।३७।११, वे०-८।८०।२, वे०सा०-६।१९।७, सा०मु०-५।४३।१३,
३. *अहिंसित्र्यौ,*
वे०-५।४३।२, वे०सा०-६।२२।१०, सा०-७।६७।५,
४. *अहिंसितानि,*
वे०-३।५८।८, ७।६७।५, सा०मु०-५।३७।१
५. *या न हिंसन्ति ताः,*
वे०-५।३७।१
६. *हिंसारहिते,*
सा०मु०-५।४३।२

७. *अहिंसकः,*
वे०-५।४३।१३, सा०-८।८०।२
८. *हिंसितुमशक्याः,*
वे०सा०-६।७५।९
९. *अमृदुम्, तीक्ष्णम्,*
स्क०-१।३७।११, वे०-१।३७।११
(अमृदुम्)
१०. *वीर्यवन्तम्,*
स्क०-१।३७।११
११. *अतिरस्कृताः,*
सा०-३।५८।८

**अमेन**
१. *अस्त्रीकान्,*
वे०-५।३१।२
२. *अपगतस्त्रीकांश्चित्,*
सा०मु०-५।३१।२

**अम्बर**
*अन्तिकनामैतत्,*
सा०-८।८।१४

**अम्बा**
१. *मातः,*
वे०- १०।९७।२, सा०-२।४१।१६,
१०।८६।७
२. *मातरः ओषधयः,*
सा०-१०।९७।२

**अम्बि**
१. *अम्बिशब्दोऽम्बापर्यायः। अम्बा-मातृभूता आपः,*
स्क०-१।२३।१६
२. *मातृस्थानीया आपः,*
सा०मु०-१।२३।१६

**अम्बी**
१. *माध्यमिकां वाचम्,*
वे०सा०-८।७२।५
२. *स्तोता,*
सा०-८।७२।५

**अम्बितमा**
१. *मातृतमे,*
वे०-२।४१।६
२. *मातॄणां श्रेष्ठे,*
सा०-२।४१।६

**अम्भृण**
१. *उदकहरः,*
वे०-१।१३३।५
२. *अतिभयंकरं शब्दायमानम्,*
सा०-१।१३३।५

**अय**
१. *गमनसाधनेन,*
सा०-६।६६।४
२. *गन्तॄणां मेघानाम्,*
स्क०-६।६६।४
३. *गन्तव्यानि स्थानानि,*
वे०-६।६६।४
४. *कर्मकरणार्थं गच्छन्तीत्यया ऋत्विजः,*
सा०-१०।११६।९
५. *कर्मकराः,*
सा०-१०।११६।९
६. *रश्मयः,*
वे०-१०।११६।९

**अयथ**
१. *अयत्नेन। लीलया,*
सा०-१०।२८।१०, ११ (अनायासेन)

**अयन**
१. *स्थानं समुद्रम्,*
वे०-३।३३।७
२. *स्थानम्,*
सा०-३।३३।७

**अयमान**

*गच्छन्,*

वे०सा०-८।१००।८, सा०-४।३८।५

**अयस्**

*१. लोहपिण्डम्,*

वे०-४।२।१७

*२. हिरण्यनामैतत्। अयोविकारा इत्यर्थः,*

सा०-५।६२।७

*३. अयः सुवर्णविकाराः,*

मु०-५।६२।७

*४. अयोमयम्,*

वे०-५।६२।७। (अयोमयी), सा०-५।६२।७। (अयोमया), ६।७५।१५ (अयोमयम्)

*५. अयोमयाः अयः पिण्डसदृशा इत्यर्थः,*

सा०-१।१६३।९

*६. अयोवद् दृढाः,*

वे०-१।१६३।९

**आयस**

*१. अयोमयकवचयुक्तदेहः,*

सा०मु०-१।५६।३

*२. दृढशरीर इन्द्रः,*

वे०-१।५६।३

*३. अयोमयः,*

वे०सा०मु०-१।८०।१२

*४. लोहमयः,*

स्क०-१।८०।१२

*५. गमनशीलः,*

स्क०-१।८०।१२

*६. अयसा निर्मितः,*

वे०- ८।९६।३, १०।९६।३ (निर्मितोऽयसा), ९६।४, सा०-८।९६।३ (अयसा निर्मितः। अयोमयः),

*७. अयः सारभूतोऽस्ति निर्मितः,*

सा०-१०।९६।३

*८. अयोविकारः,*

सा०-१०।९६।४

*९. अयोमयहृदयः,*

वे०-१०।९६।८, सा०-१०।९६।८ (अयोमयहृदयः। शत्रूणां घातकः)

**आयसी**

*१. अयोमयधाराम्,*

सा०-८।२९।३

*२. हिरण्मयी,*

सा०-७।३।७, ८।१००।८

*३. अयोमयानि अभेद्यानि,*

सा०-४।२७।१

*४. अयसा निर्मिताः,*

वे०-४।२७।१, ७।३।७, सा०-७।९५।१

*५. व्याप्तैः,*

सा०मु०-१।५८।८

*६. अयोवत् दृढतरैः,*

सा०-१।५८।८,

*७. अयोमयीम्,*

सा०मु०-१।११६।१५, २।२०।८

*८. लोहमयीम्,*

स्क०-१।११६।१५, वे०-७।९५।१

*९. अयोमयवत्सारभूतः,*

सा०-१०।१०१।८

*१०. आयसैः पुरैः,*

वे०-१।५८।८,२।२०।८ (अयसा निर्मिता पुरी)

**अयः शिप्र**

*१. अयोवत्सारभूतशिप्राः,*

सा०-४।३७।४

२. *हिरण्मयशिरस्त्राणाः,*
वे०-४।३७।४

**अयशीर्षन्**

*हिरण्यालंकृतशिरस्कः,*
वे०सा०-८।१०१।३

**अयस्मय**

१. *हिरण्येन निर्मितः,*
वे०-५।३०।१५
२. *हिरण्मयः,*
सा०मु०-५।३०।१५

**अयः स्थूण**

*अयोमयशङ्कुम्,*
सा०मु०-५।६२।८

**अयोग्रा**

१. *अङ्गुल्या,*
वे०-१०।९९।६
२. *अयोवत्कठिननखया,*
सा०-१०।९९।६

**अयोद्रंष्ट्र**

१. *दशतीति दंष्ट्रा चक्रधारा। अयोमयीभिश्चक्रधाराभिर्युक्तान्,*
सा० - १।८८।५, मु० - १।८८।५ (अयोमयीभिश्चक्रधाराभियुक्तान्)
२. *दंशनसाधना ऋष्टयो दंष्ट्रा। अयोमया ऋष्टयो येषाम्,*
सा०-१।८८।५
३. *दंष्ट्रास्थानीयत्वाद्रथोद्धी अत्र दंष्ट्रे उच्यते। अयोमयरथोद्धीन्। लोहमयोद्धीकरथस्थानित्यर्थः,*
स्क०-१।८८।५
४. *तीक्ष्णदंष्ट्रः,*
सा०-१०।८७।२

**अयोऽपाष्टि**

१. *अपयष्टिर्व्याप्तिर्यस्य स प्रदेशोऽपाष्टिः पार्ष्णिः। अयोमयोऽपाष्टिः पार्ष्णियस्य सः,*
सा०-१०।९९।८
२. *अयोमयपार्ष्णिप्रदेशः,*
वे०-१०।९९।८

**अयोहत**

१. *अय इति हिरण्यनाम। तेन तद्वान् पाणिर्लक्ष्यते। हिरण्मयेन पाणिना हतं संस्कृतम्,*
सा०-९।८०।२
२. *हिरण्येन पाणिना हतम्,*
वे०-९।८०।२
३. *हिरण्येन हतम्,*
वे. सा०-९।१।२

**अयक्ष्मा**

१. *यक्ष्मरहितानि अनामयानि,*
सा०-९।४९।१
२. *यक्ष्मरहितानि,*
वे०-९।४९।१

**अयज्ञ**

१. *यज्ञरहितम्,*
वे०-१०।१३८।६
२. *यज्ञहीनान्,*
सा०-७।६।३
३. *यज्ञरहितमसुरम्,*
सा०-१०।१३८।६

**अयज्ञसाच्**

१. *यज्ञानामसेवितारः। अकर्तारः,*
स्क०-६।६७।९
२. *यज्ञमसेवमानाः,*
वे०-६।६७।९
३. *न यज्ञयुक्ताः,*
सा०-६।६७।९

**अयज्ञिय**

*यज्ञानर्हात्प्रदेशान्निर्गत्य,*
सा०-१०।१२४।३

**अयज्यु**

*१. अयजमानान्,*
वे०-१।१२१।१३, १३१।४, २।२६।१,
सा०-७।६।३, ८३।७
*२. अयजमानान् यज्ञविहीनान् असुरादीन्,*
सा०मु०-१।१२१।१३
*३. अयजनशीलान्,*
स्क०-१।१२१।१३
*४. अयष्टारं यज्ञविघातिनं राक्षसादिम्,*
सा०-१।१३१।४
*५. अयज्वनः,*
सा०-२।२६।१, ७।६।३

**अयज्वन्**

*१. यज्वविरोधिनः सन्तः,*
सा०मु०-१।३३।४
*२. चिरन्तना अयष्टारः। जन्मन एव प्रभृति यागवर्जिता इत्यर्थः,*
स्क०-१।३३।४
*३. अयजमानाः,*
वे०-१।३३।४, वे०सा०मु०-१।१०३।६
*४. अयष्टुः स्वभूतं यष्टृभ्यः,*
स्क०-१।१०३।६
*५. अननुष्ठातॄणाम्,*
सा०-७।६१।४
*६. अयज्वनाम्,*
वे०-७।६१।४, ८।३१।१५, ७०।११, १०।४९।१
*७. यागमकुर्वतो जनान्,*
सा०-८।३१।१५, १६
*८. अयष्टारम्,*
सा०-८।७०।११, १०।४९।१

**अयतत्**

*१. प्रयत्नमकुर्वाणे,*
वे०-२।२४।५
*२. अयतमानौ अप्रयत्नौ उभौ लोकौ द्यौश्च पृथिवी च,*
सा०-२।२४।५

**अयन्त्र**

*१. अयमनैः गमनप्रतिबन्धरहितैः, स्वमार्गैः,*
उ०-१०।४६।६
*२. रक्षसां नियमनैः,*
वे०-१०।४६।६
*३. शत्रूणां नियमनैः सह,*
सा०-१०।४६।६

**अयातु**

*१. अहिंसादिनियमयुक्तेन,*
सा०-७।३४।८
*२. अगच्छन्,*
वे०-७।३४।८
*३. अराक्षसम्,*
सा०-७।१०४।१६
*४. अहिंसकम्,*
वे०-७।१०४।१६

**अयामन्**

*अगमने,*
वे०सा०-१।१८१।७

**अयास्**

*१. गमनशीलाः,*
स्क०-१।६४।११
*२. गच्छन्तः,*
वे०-१।६४।११, १५४।६, १६९।७, ५।४२।१५,
*३. जगतः,*
सा०मु०-१।८७।४

*४. अयना गन्तारोऽतिविस्तृताः,*
सा०-१।१५४।६
*५. यासो गन्तारः। अतादृशाः।*
*अत्यन्तप्रकाशयुक्ताः,*
सा०-१।१५४।६
*६. देवयजनदेशं प्रति गन्तारः,*
सा०मु०-१।६४।११
*७. अभिगन्तारः,*
सा०-१।१६७।४
*८. गमनस्वभावाः,*
वे०-१।१६७।४। सा०-३।१८।२
(सर्वत्रगमनस्वभावाः)
*९. गन्तॄणाम्,*
सा०-१।१६८।९
*१०. गमनशीलः,*
वे०-१।१६८।९, ९।८९।४
*११. गमनशीलाः रश्मयः,*
वे०-३।१८।२
*१२. अयमानानां गमनशीलान्,*
सा०-१।१६९।७।
*१३. सतत गमनशीलाः,*
सा०-३।५४।१३
*१४. गन्तारः,*
वे०-३।५४।१३, ९।८९।३, वे०सा०-६।६६।५, सा०-७।५८।२, ९।८९।४
*१५. मेघं प्रति गन्तारः,*
स्क०-६।६६।५
*१६. गमनशीला,*
वे०सा०-४।६।१०, ७।५८।२, ९।४१।१
*१७. यज्ञगन्तॄन्,*
सा०मु०-५।४२।१५
*१८. प्रेरकम्,*
सा०-९।८९।३

**अयास्य**

*१. यासः प्रयत्नः। तत्साध्यो यास्यः। न यास्योऽयास्यः। युद्धरूपैः प्रयत्नैः साधयितुम् अशक्यः,*
सा०मु०-१।६२।७
*२. गमनकुशलः,*
वे०-१।६२।७।
*३. उपक्षपयितुमशक्यः,*
वे०सा०-८।६२।२
*४. अयासनीयश्चालयितुमशक्यः,*
सा०-१०।१३८।४
*५. शत्रुभिः यसितुमशक्यः,*
वे०-१०।१३८।४
*६. अयास्यो नामाङ्गिरसोऽभिप्रेतः,*
स्क०-१।६२।७। सा०-१०।१३८।४
(अयास्योऽङ्गिरा)
*७. ऋषिः,*
सा०-९।४४।१
*८. अयास्यः नामर्षिः,*
उ०-१०।६७।१, सा०-१०।६७।१, १०८।८, (एतन्नामा)

**अयुक्त**

*१. कुत्रापि न नियुक्ताः। अबद्धाः,*
सा०-९।९७।२०
*२. अयोगिनम्,*
उ०-१०।२७।९
*३. सस्यानि भक्षयन्तम् आत्मीयं पशुम्,*
वे०- १०।२७।९
*४. असंयुक्ता,*
सा०मु०-५।३३।२

**अयुज**

*असहायः,*
वे०सा०-८।६२।२

**अयुत**

*१. अपरिमितसंख्याकम्,*
सा०-४।२६।७
*२. दशसहस्राय,*
सा०-८।१।५
*३. दशसहस्राणि चत्वारिंशत्सहस्राणि,*
सा०-८।२।४१
*४. धनानि,*
सा०-८।२१।१८

**अयुद्धसेन**

*१. अप्रहतसेनः,*
सा०-१०।१३८।५
*२. अयुध्यमानाऽऽत्मसेनः,*
सा०-१०।१३८।५

**अयुद्ध**

*१. अयोद्धा,*
उ०सा०-१०।२७।१०, वे०सा०-८।४५।३
*२. युद्धमकुर्वन्,*
वे०-१०।२७।१०

**अयुध्य**

*१. योधयितुमशक्यः,*
वे०-१०।१०३।७
*२. अहन्तव्यानां गवाम्,*
सा०-१०।१०३।७

**अयोद्धृ**

*१. योद्धुमसमर्थः,*
स्क०-१।३२।६
*२. युद्धासमर्थः,*
वे०-१।३२।६
*३. योद्धरहित इव इन्द्रम्,*
सा०मु०-१।३२।६

**अर (१)**

*१. अलम्,*
उ०सा०-१०।७१।१०, स्क०-१।१०८।२, वे०-६।६३।२, वे०सा०-१।१७३।६, १८७।७, सा०-१।१४२।१०, २।१७।६, ६।७४।१, ७।८६।७, ८।८२।३, ९।२।२६, २७, १०।९६।७, १०१।२, १०६।८, ११७।३, सा०मु०-१।६६।३
*२. पर्याप्तः,*
उ०-१०।६३।६,उ०सा०- १०।७१।१०, स्क०वे०-१।६६।३, स्क०वे०सा०-६।७४।१, ७।७।६, स्क०वे०सा०मु०-१०८।२, स्क० सा०- ६।४१।५, ६३।२, वे०-१।१४२।१०, २।५।७, ५।४४।८, ६६।५, ७।६६।१४, १०।९।३, १०।९७।१८, १०१।२, १०६।८, वे०सा०-१।७०।३, २।१७।६, १८।२, ३।३५।५, ६।१३।४, १६।४३, ७।८६।७, ८।१५।१३, ४५।१०, ९।२।२५, २६, २७, ९।२४।५, १०।९६।७, ११७।३ सा०-१।१७३।६, सा०- २।५।८, ४।३२।२४, ८।८२।३, ९।२।२४
*३. समर्थः,*
स्क०-१।७०।३, सा०-१।१४२।१०, १०।७१।१०
*४. पुरुवारं बहुप्रभूतं च,*
सा०-१।१४२।१०
*५. परिचरन्तु,*
सा०-१।१७०।४
*६. अलङ्कृण्वन्तु,*
वे०-१।१७०।४, २।५।८, ४।३३।२, वे०सा०-१०।६३।६
*७. सम्पूर्णम्,*
सा०-१।१८७।७

*८. अत्यर्थम्,*
सा०-२।५।७, ४।३३।२, १०।९७।१८,
सा०मु०-५।४४।८, ६६।५,
*९. सुष्ठुः,*
स्क०-६।७४।१
*१०. गमनम्,*
वे०सा०-८।४६।१७
*११. क्षिप्रम्,*
सा०-१०।९।३

**अरंकृत्, कृत**

*१. अलंकर्तारः,*
वे०सा०-२।१।७, सा०मु०-१।१४।५
*२. अलङ्कृतः,*
वे०सा०-१०।११९।१३
*३. हविरादीनामलंकर्तारः,*
सा०-८।५।१७
*४. बहुभिर्द्रव्यैरलंकाररूपैर्युक्तः,*
सा०-१०।१४।१३
*५. पर्याप्तकारिणः,*
स्क०वे०-१।१४।५, वे०-८।६७।३,
वे०सा०-८।५।१७,
*६. पर्याप्तकारिणीम्,*
वे०-८।१।१०
*७. अलङ्कर्तारं पर्याप्तकारिणम्,*
सा०-८।१।१०, ६७।२

**अरंगम**

*१. पर्याप्तं शत्रून् प्रति गन्त्रे,*
स्क०-६।४२।१
*२. पर्याप्तगामिने,*
वे०-६।४२।१
*३. पर्याप्तगमनाय,*
सा०-६।४२।१

**अरितृ**

*१. नाविकः,*
वे०-९।९५।२
*२. कर्णधारः,*
सा०-२।४२।१
*३. जनांस्तीरं प्रापयन्नाविकः,*
सा०-९।९५।२

**अरित्र**

*१. गच्छति येन नौः तत् अरित्रम्। अपल्लवक इत्यपभ्रंशेन यन्नाविकानां प्रसिद्धं तत्,*
स्क०-१।४६।८
*२. समुद्रगमनसाधनं जलपात्रम्,*
वे०-१।४६।८
*३. तारकाः,*
वे०सा०-१०।४६।७
*४. यज्ञनावं प्रणेतारः,*
उ०-१०।४६।७
*५. सर्वगामिनः,*
उ०-१०।४६।७
*६. गमनसाधनं नौरूपम्,*
सा०मु०-१।४६।८

**अरित्रपरणी**

*१. कर्षणादिरूपेणारित्रेण पारयितव्याम्,*
सा०-१।१०१।२
*२. अरित्रैः कर्षणादिभिः पारयितव्याम् चयनाख्यम्,*
वे०-१०।१०१।२

**अर (२)**

*१. नाभौ कीलितान् काष्ठविशेषान्,*
सा०-१।३२।१५
*२. नाभावर्पितान् सूक्ष्मान् स्थासकान्,*
सा०मु०-५।१३।६
*३. रथस्य शङ्कून्,*
सा०-१।१४१।९, सा०मु०-५।५८।५
(रथशङ्कवः)

४. चक्राङ्गभूताञ्छङ्कून्,
सा०-८।७७।३
५. अर्याणां स्वामिनाम्,
सा०-८।२०।१४
६. पुनः पुनः आगच्छताम्,
वे०-८।२०।१४

**अरमणस्**

१. पर्याप्तमनसम्,
वे०-६।१७।१०
२. शत्रूणामरमभिगन्तृमनो यस्य तम्,
सा०-६।१७।१०

**अरक्षस्**

१. रक्षोवर्जितेन,
वे०-८।१०१।८, वे०सा०-१।१२९।९,
सा०मु०-५।८७।९
२. राक्षसवर्जितः,
वे०-१।१९०।३, ५।८७।९
३. स्वविरोधिरक्षोरहितस्य,
सा०-१।१९०।३
४. बाधकरहितेन,
वे०-७।८५।१, सा०-२।१०।५
५. रक्षोवर्जितं दानम्,
सा०-८।१०१।८
६. रक्षोरहितां राक्षसैरसंस्पृष्टाम्,
सा०-७।८५।१

**अरज्जु**

१. रज्जुवर्जितः,
वे०-२।१३।९, ७।८४।२
२. रज्जुवर्जिते बन्धनागारे,
सा०-२।१३।९
३. रज्जुरहितैः रोगादिभिः,
सा०-७।८४।२

**अरण**

१. अरमयिता, दाहेन दुःखकारी,
सा०-२।२४।७
२. अग्निना दग्धः,
वे०-२।२४।७
३. अरिम्,
सा०-३।५३।२४
४. शत्रूणाम् अरणीयम्,
वे०-३।५३।२४
५. अशब्दम्,
सा०मु०-५।८५।७
६. अदातारम्,
सा०-५।८५।७
७. नित्यं निरन्तरम,
सा०-५।८५।७
८. गृहमागतः,
वे०-५।८५।७
९. असुखकरम्,
सा०-८।४।१०
१०. अर्यं स्वामिनम्,
सा०-१०।११७।४
११. अरममाणम्,
वे०-१०।११७।४

**अरणी**

अश्वत्थम्,
सा०-१०।१२४।२

**अरण्य**

१. वनानि,
वे०-१०।१४६।१
२. कानने,
सा०-६।२४।१०
३. अरण्याधिदेवते,
सा०-१०।१४६।१

*४. कान्ताराणि,*
सा०-१०।१४६।१

**अरण्यानी**

*१. अरण्यस्य पालयित्री काचिदधि-देवतारण्यानि,*
सा०-१०।१४६।१
*२. कान्ताराणि,*
सा०-१०।१४६।१
*३. अरण्यस्य पत्न्यरण्यमपार्णं भवति,*
सा०- १०।१४६।१ (यास्क०- ९।२९, ३०)
*४. ग्रामादरमणं भवति,*
सा०-१०।१४६।१ (यास्क०- ९।२९, ३०)
*५. महारण्ये,*
सा०-१०।१४६।४

**अरणि**

*१. आयुधैः,*
वे०-१।१२९।५
*२. यज्ञादिरूपैः,*
सा०-१।१२७।४
*३. अतिशयेन तेजस्विभिः, युद्धादिरूपैः मार्गैः इव,*
सा०-१।१२९।५
*४. गमनसाधनैर्यज्ञादिमार्गैः,*
सा०-१।१२९।५
*५. दैवयज्ञार्थम्,*
सा०-३।२९।२

**अरति**

*१. अभिगन्तारम्,*
वे०-१।५८।७, १२८।६, २।४।२, वे०सा०-६।४९।२, वे०सा०मु०-६।३।५, १५।४, सा०-४।२।१, ६।६७।८
*२. गमनशीलम्,*
वे०-१।१२८।८, ४।१।१
*३. गन्तादित्यः,*
वे०-२।२।२
*४. गन्तारम्,*
स्क०-६।४९।२, स्क०वे०- ६।६७।८, वे०-३।१७।४, ७।१०।३, ८।१९।२, २१, १०।३।१, ३।२, ३।७, ४६।४, वे०सा०-२।२।३, ७।५।१, १६।१, १०।३।६, ४५।७, ६१।२०, वे०सा०मु०-६।७।१,
*५. शीघ्रं गन्तारम्,*
सा०-४।१।१
*६. गच्छन्,*
वे०-४।२।१
*७. गन्तव्यं स्वामिनम्,*
सा०-६।७।१
*८. गन्त्री ज्वाला,*
सा०-६।१२।३
*९. ज्वाला,*
वे०-६।१२।३
*१०. अग्निः सूर्यात्मना गन्ता,*
सा०-१०।३।७
*११. गन्ता अग्निः,*
वे०-१०।३।२। सा०-१०।३।२ (गमन-शीलोऽग्निः)
*१२. हविरादाय देवान् प्रति गन्ता,*
उ०-१०।४५।७ (हविरादाय गन्ता), १०।४६।४ (सर्वगतं हविरादाय), सा०-१०।३।१
*१३. गन्तारं सर्वदा यागगृहे वर्तमानम्,*
सा०-१०।४६।४
*१४. सञ्चरन्तम्,*
वे०-२।२।३

१५. ईश्वरः,
सा०-१।१२८।६, २।२।३, २।४
१६. ईश्वरं तादृशं देवम्,
सा०-१।१२८।९
१७. अर्यमीश्वरम्,
सा०-८।१९।२१।
१८. अर्यं स्वामिनम्,
सा०-६।१५।४, ४९।२, ८।१९।१
१९. स्वामिनम्,
सा०-७।१०।३, १६।१
२०. अधिपतिः,
सा०मु०-१।५९।२
२१. अभिप्राप्तव्यम्,
सा०-८।१९।१
२२. अरममाणः,
सा०-१।१२८।६
२३. अप्रीतिः,
सा०-१।१२८।६
२४. व्याप्तो विस्तृतः,
सा०-२।२।२, २।३ (व्याप्तम्)
२५. प्रापयितारम्,
सा०मु०-१।५८।७
२६. न विद्यते विषयेषु रतिः प्रतीर्यस्या सावरतिः। विषयेष्वसक्तम्,
सा०-३।१७।४
२७. अरमणं दुःखमभिगन्तारम्,
सा०-४।३८।४
२८. अरमणे देशे,
सा०-५।२।१
२९. अरिम्,
सा०-४।३८।४
३०. अरण्यां हितम्,
सा०-५।२।१
३१. अन्तर्हिते देशे,
वे०-५।२।१
३२. भूतानामारयिता,
सा०-१०।४५।७
३३. देवान् प्रति निर्भर्त्सयिता,
उ०-१०।४५।७
३४. आरतिः आरण,
उ०-१०।४५।७
३५. आरयिता भूतानाम्,
उ०-१०।४५।७

**अरत्नि**

१. अरममाणाः शत्रवः,
सा०-८।८०।८
२. अदानाः अयजमानाः शत्रवः,
वे०-८।८०।८
३. हस्ते,
सा०-१०।१६०।४
४. राजवर्जिते देशे,
वे०-१०।१६०।४
५. रमणीयधनवर्जिते,
वे०-१०।१६०।४

**अरथ**

१. रथहीनाः,
सा०मु०-५।३१।५
२. रथवर्जिताः,
वे०-५।३१।५, वे०सा०-१।९७।२० १०।९९।४

**अरथी**

१. रथिः रथिः। न रथिररथीः। असारथिरपि स्तोत,
सा०-६।६६।७
२. सारथिरहितः,
स्क०-६।६६।७

**अरध्र**

१. असमृद्धम्,
वे०-६।१८।४, ६२।३

*२. शत्रुभिर्वशीकर्तुमशक्यस्य। रघेर्वशीकरणार्थस्य रूपम्,*
सा०-६।१८।४
*३. साद्गुण्याद् रक्षोभिरहिंसितम्,*
स्क०-६।६२।३
*४. रक्षोभिरहिंसितम्,*
वे०-६।६२।३

**अरपस्**

*१. अपापः,*
सा०-२।३३।६, ८।१८।९, १०।३७।११
*२. पापवर्जितः,*
वे०-८।१८।९
*३. पापरहितम्,*
वे०सा०-१०।१५।४, सा०-१०।१३७।५
*४. अपापत्वम्,*
वे०-१०।३७।११

**अरमति**

*१. पर्याप्तमतिम्,*
वे०-५।५४।६, ७।३४।२१, ३६।८
*२. पर्याप्तबुद्धिः,*
सा०-७।३४।२१
*३. पर्याप्तस्तुतिः,*
वे०-८।३१।१२, वे०सा०-१०।६४।१५,
*४. अलंमतिः पर्याप्तस्तुतिः,*
सा०-८।३१।१२
*५. अलंमतिः पर्याप्ता मतिः अस्मदीया यस्याः कतृत्वेन सम्बन्धिनी। पर्याप्तया सर्वगुणग्रहणसमर्थया अस्मत्प्रज्ञया कृतेत्यर्थः,*
उ०-१०।६४।१५
*६. अनुपरतिः,*
सा०-२।३८।४, ७।३६।८, (उपरति-रहिताम्), १०।६४।१५ (अनुपरता)
*७. धीरः,*
वे०-२।३८।४
*८. अनुपरमाम्,*
वे०-५।४३।६
*९. आ समन्ताद्रममाणाम्,*
सा०मु०-५।४३।६
*१०. सर्वत्र गन्त्री,*
सा०-५।४३।६
*११. आरमणं धनादिकं प्रति,*
सा०मु०-५।५४।६
*१२. विरामवर्जिताः,*
वे०-७।१।६
*१३. दीप्तिः,*
सा०-७।१।६
*१४. सर्वविषयव्यापिबुद्धिः,*
सा०-७।३४।२१
*१५. भूमिम्,*
सा०-७।४२।३
*१६. सन्ततां ज्वालाम्,*
वे०-७।४२।३
*१७. अपर्यन्ता,*
वे०-१०।९२।४, ५
*१८. पर्यन्तरहिता,*
सा०-१०।९२।४
*१९. रमतिर्विरामोऽवसानम्। तद्रहितामपर्यन्ताम्,*
सा०-१०।९२।५

**अरममाण**

*१. अनुचरन्,*
वे०- ९।७२।३
*२. अनुपरतः सन्। पुनः पुनर्देवानां प्रीणनाय ग्रहादीनि प्रविशन्नित्यर्थः,*
सा०-९।७२।३

**अररिन्द**

*१. उदकानि,*
वे०-१।१३९।१०
*२. वृष्टिलक्षणान्युदकानि,*
सा०-१।१३९।१०

**अररिवस्**

*१. अदातुः,*
वे०-१।१८।३, १४७।४, वे०सा०-७।१।१३, ९४।८, सा०-९।२९।५
*२. अदातू रक्षःप्रभृतेः,*
सा०मु०-५।७७।१
*३. अदाता अस्मद्दानप्रतिबन्धकः इत्यर्थः,*
सा०-१।१४७।४
*४. अप्रयच्छतः,*
वे०-३।१८।२, ९।२९।५
*५. हविरप्रयच्छतः,*
सा०-३।१८।२, ७।५६।१९
*६. अयजमानाय,*
वे०-७।५६।१९
*७. अरेः,*
सा०-७।९४।८
*८. उपद्रवं कर्तुमस्मत्समीपं प्राप्तस्य शत्रुरूपस्य,*
सा०मु०-१।१८।३
*९. देवेभ्यो हविषामदातुरयष्टुः स्वभूतः,*
स्क०-१।१८।३

**अररु**

*१. अरणशीलं गमनस्वभावं कंचिन्मेघम्,*
सा०-१।१२९।३
*२. अदातारमयजमानम्,*
वे०-१।१२९।३
*३. असुरमेतन्नामन्,*
सा०-१०।९९।१०
*४. असुरम्,*
वे०-१०।९९।१०

**अरश्मन्**

*१. रश्मिवर्जिताः,*
वे०-९।९७।२०
*२. रश्मिवर्जिताः। रज्जुरहिताः,*
सा०-९।९७।२०

**अरस, सा**

*असारं बाधकं न भवतीत्यर्थः,*
सा०-१।१९१।१६

**अराजिन्**

*१. ईश्वरवर्जितम्,*
वे०-८।७।२३
*२. राज्ञा केनचित्स्वामिनानधिष्ठिताः,*
सा०-८।७।२३
*३. राजा स्वामी अस्य न विद्यते इत्यराजेन्द्रः,*
सा०-८।७।२३

**अराति, ती**

*१. शत्रवः,*
उ०सा०-१०।३४।१४, स्क०वे०सा०मु०-१।४३।८, वे०-२।२३।५, ६।१६।२७, ५९।८, ७।८३।५, ८।७१।४, वे०सा०-३।२४।१, ४।२६।७, ८।४८।३, ९।७९।३, ९६।१५, ९७।१०, सा०-३।१८।१, ४।५०।११, ७।१।७, ८३।३, ८।३९।२, १०।५७।१, सा०मु०-५।५३।१४
*२. अदानशीलाः शत्रवः,*
सा०मु०-१।२९।४
*३. अरातिशब्दः शत्रुपर्यायः,*
स्क०-१।२९।४
*४. अदाता शत्रुः,*
सा०-२।७।२

*५. अरातित्वं शात्रवम्,*
सा०- ४।४।४
*६. अभिगमनशीलाः शत्रवः,*
सा०-७।८३।५
*७. शत्रुसेनाः,*
वे०-२।२३।९, ३।१८।१, ४।२७।२, सा०-६।१६।२७, ४४।९, ७।९७।९, ८।११।३
*८. शत्रुभूताः प्रज्ञाः,*
वे०-४।५०।११, सा०-६।४८।१६
*९. शत्रुभूताः। स्त्रीलिङ्ग निर्देशवशाद् विशः,*
स्क०-६।४४।९
*१०. अदानशीलाः शत्रुभूताः प्रजाः,*
सा०-८।९।१
*११. शत्रुभूतः,*
वे०-१०।३४।१४

**अरातीयत्**

*१. अरातिं शत्रुमिवास्मानाचरतः शत्रोः ...न विद्यते रातिर्दानमस्मिन्नित्यरातिः शत्रुः,*
सा०-१।९९।१
*२. अरातिरदानं हविषः, तां कामयमानस्य सोममददतः,*
वे०-१।९९।१

**अरातीवन्**

*१. अरातित्ववान् शत्रुः,*
वे०-१।१४७।४
*२. स्वयमदानवान्,*
सा०-१।१४७।४
*३. अभिमुखमागमनवान्,*
सा०-२।२३।७

**अराधस्**

*१. अधनम्। दारिद्र्यात् यष्टुमसमर्थम्,*
स्क०-१।८४।८
*२. अनाराधयन्तम्,*
वे०-१।८४।८
*३. राधोधनम्। दानार्हधनरहितात्। लुब्धकादित्यर्थः,*
सा०- ५।६१।६। मु०- ५।६१।६ (धनरहितात् लुब्धकात्)
*४. हविर्लक्षणेन राधसा धनेन रहितम्। अयष्टारम्,*
सा०मु०-१।८४।८
*५. अधनात्,*
वे०-५।६१।६, १०।३२।२
*६. हविर्लक्षणेन धनेन रहितात्। अयष्टुश्चेत्यर्थः। यो हि न देवान् स्तौति न यजते स निर्धनो भवत्यल्पधनोः वा,*
स्क०-५।६१।६
*७. धनरहितान्,*
सा०-१०।३२।२
*८. संसाधककर्मरहितम्,*
सा०-९।१०१।१३
*९. संराधककर्मरहितम्,*
वे०-९।१०१।१३
*१०. अयजमानान्,*
वे०-१०।६०।६
*११. अदातॄनयजमानान्,*
सा०-१०।६०।६

**अराय**

*१. अधना,*
सा०-८।६१।११
*२. अहविष्का,*
सा०-८।६१।११

३. नाधनाः,
वे०-८।६१।११ (यास्क०- ६।२५)

अरायी

१. अदायिनि दानविरोधिनि,
सा०-१०।१५५।१
२. अदानशीले,
वे०- १०।१५५।१
३. अदात्रीम् दानविरोधिनीम्,
सा०- १०।१५५।२
४. अप्रदात्रीम्,
वे०-१०।१५५।२

अरावन्

१. अरणवानभिगन्ता,
सा०-७।६८।७
२. अदाता,
वे०-१।३६।१५, ९।१३।९, १६ वे० सा०-७।३१।५, ८।२८।४, ६१।२५, ९।६३।५
३. अस्मभ्यं देयस्य धनस्य अदातॄन् वैरिणः,
सा०मु०-१।३६।१६
४. अदातॄन् हविषः। अयष्टॄन्,
स्क०-१।३६।१६
५. अप्रदाता,
वे०-८।२८।४
६. अदानानयजमानान्,
सा०- ९।१३।९
७. न प्रयच्छति,
सा०- ९।२२।५
८. शक्तौ सत्यां धनानामदातॄंश्च,
सा०-९।६१।२५
९. गमनवान् भूत्वा,
सा०- १०।३७।१२
१०. अरणवान्,
सा०-१०।३७।१२
११. अर्ता,
सा०-१०।३७।१२
१२. अभिभवनार्थम् अस्मान् प्रति गमनवान्,
सा०-१०।३७।१२
१३. गन्ता,
सा०-१०।३७।१२
१४. अदातुर्हविषाम्। अयागशीला-दित्यर्त्यर्थः,
स्क०-१।३६।१५
१५. अरातीनाम्,
वे०-७।५६।१५। सा०-७।५६।१५
(अरातिः शत्रुभूतः)
१६. धनादीनामदातृरूपात्,
सा०मु०-१।३६।१५

अरि

१. शत्रुः,
वे०-७।२१।९, ६०।११, ६८।२, ८।४८।८, ९।७९।३, १०।२७।८, वे०-१०।११५।५, वे०सा०-७।९२।४, ८।६०।१२, १०।४२।१, ५९।३, सा०-१।१६९।६, २।८।२, १२।४, ४।१६।१९, ५।४८।५, ६।१३।५, १४।३, १५।३, ७।५६।२२, सा०मु०-१।४।६, ११८।९,
२. शत्रवोऽपि ईश्वराः,
स्क०-१।४।६
३. शत्रोः संबन्धिनम्,
सा०- १।७३।५, २।१२।४, ७।८३।५
४. शत्रुरिन्द्रः
सा०-८।२।१४
५. वैरिणः,
स्क०-१।११८।९

*६. अमित्रम्,*
सा०मु०-५।४८।५
*७. शत्रूणामभिगन्तारः सन्तः,*
सा०-७।४८।३
*८. अस्मद्विरोधिनः,*
सा०-७।६८।२
*९. ईश्वरः,*
स्क०-१।७०।१, वे०-७।८।१, १०।१४८।३ वे०सा०-८।३४।१०, वे०सा०मु०-५।३३।६, सा०-१०।२८।१
*१०. ईश्वरः। स्तुत्युच्चारणे समर्थ इत्यर्थः,*
स्क०-१।९।१०
*११. ईश्वराः। अप्रतिहताग्निगुण, प्रकाशनसामर्थ्या इत्यर्थः,*
स्क०-१।७१।३
*१२. ईरयिता स्तुतेरीश्वरः,*
सा०-१।१८४।१
*१३. ईश्वरः कर्माङ्गदेवलक्षणः,*
उ०-१।१८४।१
*१४. ईश्वरो यजमानः,*
उ०-१०।३९।५
*१५. स्वामी,*
उ०-१०।४२।१, उ०वे०-१०।२०।४, उ०सा०-१०।२७।८, वे०-१।१६९।६, ४।२।१८, ५।३३।२, १०।१८४।१, १९१।१, वे०सा०-३।४३।२, ४।२९।१, ५।२।१२, ८।२१।१६, २४।२२, ६५।९, १०।८६।१, ११६।६, १४८।३, सा०-१।७०।१, ४।४८।१, ७।८।१
*१६. अरणीयस्य स्वामिनः,*
सा०-१।१६९।६
*१७. स्वामी लब्धगोधनः,*
सा०-४।२।१८
*१८. स्तुतीनाम् अभिषवणकर्मणां च करणे स्वामी,*
उ०-१०।७६।२
*१९. स्वामी सर्वस्येश्वरः,*
सा०-१०।११५।५
*२०. स्वामी सर्वस्याग्निः,*
उ०-१०।२०।४
*२१. धनस्वामिन्यः,*
सा०-१।७१।३ (धनस्य स्वामिन्यः), मु०-१।७१।३
*२२. स्तोतारः,*
सा०-१।१८५।९, ४।२०।३, ४८।१
*२३. प्रेरिता स्तोता,*
वे०-१।९।१०
*२४. इरयति स्तुतीः प्रेरयतीत्यरिः स्तोता,*
सा०-७।६०।११
*२५. अभिगन्ता,*
वे०-१।१५०।१, ६।१३।५, १४।३, ७।५६।२२, ८।२।१४, वे०सा०-८।१।४, सा०-९।७९।३
*२६. अभिगन्त्रीः,*
वे०सा०-१०।१३३।३, सा०-७।९७।९
*२७. गन्त्री,*
उ०-१०।२७।८, (स्वाधिकारं प्रति गन्त्र्यः) सा०-४।५०।११
*२८. गन्तारः,*
वे०-८।९४।३, वे०सा०मु०-५।५४।१२,
*२९. स्तोत्रकरणार्थमितस्ततो गन्तारः,*
सा०-८।९४।३
*३०. गन्ता वायुः,*
वे०-८।७२।१६
*३१. अरणशीलो वायुः,*
सा०-८।७२।१६

*३२. गन्ता पतिः यजमानः,*
सा०- १०।३९।५
*३३. गन्ता पतिः,*
वे०-१०।३९।५
*३४. गन्तव्यः,*
सा०-१०।२०।४
*३५. गन्तव्यः प्राप्तव्यः,*
सा०मु०-१।७०।१
*३६. अभिगच्छन्तः,*
वे०सा०-८।३९।२, ९।६१।११,
*३७. निर्गन्ता,*
वे०-१०।२८।१
*३८. याचितॄणां धनानि अप्रयच्छन्तीः,*
वे०-४।५०।११
*३९. अर्ता हविरादिप्रापणेन सेवकोऽहम्,*
सा०-१।१५०।१
*४०. होता,*
सा०-१।१८४।१
*४१. प्रेरकः,*
वे०- १०।७६।२
*४२. ग्राव्णामभिषवाय प्रेरको यजमानः,*
सा०-१०।७६।२
*४३. हविषां प्रेरकः अग्निः,*
सा०-७।८।१
*४४. प्रदाता,*
वे०-१।७०।१
*४५. अर्थम्,*
वे०-१।११८।९
*४६. व्यापकम्,*
वे०-४।३८।२
*४७. गमनशीला देवाः,*
वे०-७।३४।१८
*४८. अर्यमा,*
सा०-७।६४।३
*४९. करादीनाम् अप्रदानानि,*
वे०-७।८३।५
*५०. धनम्,*
वे०-१।१८५।९

## अरि-गूर्त

*१. अरिषु अदातृषु सदा शब्दितः,*
सा०-१।१८६।३
*२. अरीणां हननाय उद्युक्तः,*
सा०-१।१८६।३
*३. अरीणामाहवाता,*
वे०-१।१८६।३

## अरि-धायस्

*१. अरिभिरीश्वरैर्धारणीयाः बहुमूल्या; असंख्याताः,*
सा०-१।१२६।५
*२. अभिगन्तॄणां मनुष्याणां धारकाः,*
वे०-१।१२६।५

## अरि-ष्टुत

*अरिभिः प्रेरयितृभिः प्रशस्तः,*
सा०-८।१।२२

## अरिप्र, प्रा

*१. अपापम्,*
वे०-७।४७।१, ९०।४, ८।८।९, १०।७१।१ (अपापं वेदार्थज्ञानम्)
*२. पापरहितम्,*
सा०-७।४७।१, ९०।४, १०।७१।१
*३. रिप्रमिति पापनाम। अपापौ,*
सा०-८।८।९
*४. अपापं सदा भवति पापापनोदम्,*
उ०-१०।७१।१
*५. कल्याण्यः,*
वे०-१०।१२०।९

**अरिषण्य**

*अहिंसकौ,*
वे०सा०-२।३९।४

**अरिषण्यत्**

*१. हिंसन्,*
वे०-६।२४।९, २५।२, वे०सा०-२।३७।३
*२. अहिंसन्। पालयन्नित्यर्थः,*
सा०-६।२५।२
*३. अहिंसंस्त्वम्,*
सा०-६।२४।९
*४. अस्मानहिंसन् अस्मद्धिंसा, परिहारार्थमित्यर्थः,*
स्क०-१।६३।५
*५. रेषणं हिंसनमनिच्छन्,*
सा०-१।६३।५

**अरिष्ट, ष्टा**

*१. अनुपहिंसितैः,*
वे०-१।११२।२५
*२. अहिंसितः,*
उ०सा०-१०।६३।१३, स्क०वे०सा०मु०-१। ४१।२, स्क०वे०-६।६९।१, स्क० सा०-६।५४।७, स्क०सा०मु०-१।११२। २५, वे०-७।४०।४, वे०सा०-२।२७।२, ७, ३४।७, ६।१९।४, ७।४३। ५, ९७।४, ८।२७।४, १०।८५।२४, सा०-२।२७।१६, ८।२७।१६, १०। १२८।३, १६६।२, सा०मु०-५।१८।३, ३१।१, ४२।८
*३. अक्षताः,*
वे०-२।२७।१६
*४. अनुपद्रवैः,*
सा०-६।६९।१
*५. अबाधितान्,*
वे०-७।४०।४
*६. अविनष्टः,*
वे०-१०।६३।१३
*७. अन्यूनाः,*
वे०-१०।१२८।३

**अरिष्टगातु**

*१. अहिंसितमार्गः,*
वे०-५।४४।३
*२. अहिंसितगमनः,*
सा०-५।४४।३

**अरिष्टग्राम**

*१. अक्षतगणाः,*
वे०-१।१६६।६
*२. अहिंसितसंघाः,*
सा०-१।१६६।६

**अरिष्ट-ताति**

*१. अविनाशकरीभिः,*
वे०- १०।१३७।४
*२. अविनाशाय,*
वे०सा०-१०।६०।८
*३. अहिंसाकरैः,*
सा०-१०।१३७।४

**अरिष्टनेमि**

*१. नेमिः इति आयुधनाम। अरिष्टोऽहिंसितो नेमिर्यस्य,*
सा०-१।८९।६
*२. रथचक्रस्य धारा नेमिः। यत्संबन्धिनो रथस्य नेमिः न हिंस्यते सोऽरिष्टनेमिः,*
सा०-१।८९।६
*३. अरिष्टोऽहिंसितो नेमिर्यस्यैवम्भूतः,*
मु०-१।८९।६
*४. अहिंसितायुधः,*
स्क०-१।८९।६

५. *अहितायुधः,*
वे०-१।८९।६
६. *अहिंसितचक्रवलयम्,*
सा०-१।१८०।१०
७. *अक्षतचक्रधारम्,*
वे०-१।१८०।१०
८. *अहिंसितप्रधिविशिष्ट हे रथ,*
सा०-३।५३।१७

**अरिष्ट-भर्मन्**
१. *अहिंसितहविर्भरणे,*
वे०-८।१८।४
२. *अहिंसितभरणे,*
सा०-८।१८।४

**अरिष्ट-रथ**
१. *अहिंसितयज्ञरथः,*
उ०सा०-१०।६।३
२. *अहिंसितरथः,*
वे०-१०।६।३

**अरिष्टवीर, रा**
१. *अहिंसितपुत्रपौत्राः,*
स्क०-१।११४।३
२. *अनुपहिंसितवीराः,*
वे०-१।११४।३
३. *वीर्याज्जायन्ते इति वीराः प्रजाः। अरिष्टा अहिंसिता वीरा येषां तथाभूतः सन्तः,*
सा०-१।११४।३, मु०-१।११४।३
(अरिष्टा अहिंसिता वीराः प्रजाः येषां ते तथाभूताः सन्तः)

**अरिष्टि**
१. *अविनाशम्,*
वे०-२।२१।६
२. *अहिंसाम्,*
सा०-२।२१।६

**अरिष्यत्**
१. *अहिंस्यमानाः,*
वे०-४।५७।३ वे०सा०-२।८।६,
२. *अहिंस्यमानमविनाशिनमित्यर्थः,*
उ०-१०।६३।१४
३. *अहिंस्यन्तः,*
सा०-४।५७।३
४. *अहिंसिताः,*
सा०-८।२५।११, १०।६३।१४
५. *अरिष्टा भवन्तः,*
वे०- ८।२५।११
६. *पालनवत्त्वात् केनाप्यबाधिताः,*
सा०-८।२५।१२
७. *इन्द्रसहायानां मरुतामबाधकम्,*
सा०-१०।६३।१४

**अरीळ्ह**
१. *जिह्वयाऽलीढः,*
वे०-४।१८।१०
२. *शत्रुभिरनभिभूतम्,*
सा०-४।१८।१०

**अरुग्ण**
१. *अभग्नपूर्वम्,*
स्क०-६।३९।२
१. *अन्यैरभग्नम्,*
सा०-६।३९।२

**अरुच्**
१. *अदीप्तीन् लोकान् आदित्यादीन्,*
स्क०-६।३९।४
२. *अरोचमानान्,*
वे०-६।३९।४
३. *प्रकाशरहितान् तमसा मलीमसान् सर्वाल्लोकान्,*
सा०-६।३९।४

**अरुण, णा**

*१. आरक्तो वर्णः,*
स्क०-१।७३।७, ९२।१५, १०५।१८, ६।६४।३

*२. रक्तवर्णः,*
उ०सा०- १०।३०।२, स्क०-१।८८।२, ९२।२

*३. आरोचनं श्वेतवर्णं तेजः,*
सा०- १।७३।७, मु० - १।७३।७ (आरोचमानमं श्वेतवर्णं तेजः)

*४. लोहितवर्णः,*
सा०-६।६४।३, सा०मु०-१।१०५।१८, ११३।१४,

*५. आरोचमानैः,*
वे०- १०।५५।६, वे०सा०- २।३४। १३, ७।९८।१, सा०-२।३४।१२, १०। १४४।५

*६. शुभ्रवर्णाः,*
सा०मु०-१।९२।२

*७. गमनशीलैः,*
सा०-१।१३०।९, २।१।६

*८. अत्यन्ततेजोयुक्तः,*
सा०-१।१३०।९

*९. विकृतरूपाणि दिगन्तराणि,*
सा०-१०।१६८।१

**आरुणी**

*१. अरुणीः वडवाः,*
स्क०-१।६४।७

*२. अरुणवर्णासु वडवासु,*
वे०सा०मु०-१।६४।७

**अरुणप्सु**

*१. अरुणरूपाः,*
वे०-१।४९।१, ८।५।१, ७।७, ७३।१६, वे०सा०मु०-५।८०।१

*२. अरुणवर्णाः,*
सा०मु०-१।४९।१

*३. अरुणवर्णरूपाः,*
सा०-८।७।७

*४. आरक्तरूपाः,*
स्क०-१।४९।१

*५. आरोचमानरूपाः,*
सा०-८।५।१

*६. शुभ्रवर्णाः,*
सा०-८।७३।१६

**अरुणयुज्**

*१. आरुण्ययुक्तैः,*
वे०-६।६५।२

*२. अरुणवर्णयुक्तैः,*
सा०-६।६५।२

**अरुणाश्व**

*रक्ताश्वाः,*
स्क०-५।५७।४

**अरुणि**

*अरुणवर्णाः,*
सा०-१०।९५।६

**अरुणी**

*१. अरुणवर्णाः,*
स्क०सा०-१।१२१।३, स्क०सा०मु०-१।११२।१९, वे०- १०।१५।७, वे०सा०-४।१४।३, सा०-४।१।१६, २।१६,१०।६१।४

*२. अरुणवर्णगोयुक्ताः,*
सा०-१।१४०।१३

*३. आरोचमानाः,*
सा०-१।११२। १९, १२१।३

*४. आरोचमानानां ज्वालानाम्,*
सा०-१०।१५।७

५. *आरुण्यसाधनभूताः*,
सा०-१।१४०।१३
६. *गावः*,
वे०-१।१४०।१३

**अरुतहनु**

१. *अशब्दितहन्तव्यः*,
वे०-१०।१०५।७
२. *अबाधितहनुः*,
सा०-१०।१०५।७

**अरुशहन्**

१. *यजमानां शत्रूणां हन्ता*,
वे०-१०।११६।४
२. *अरुशाः शत्रवः। तेषां हन्ता*,
सा०-१०।११६।४

**अरुष**

१. *आरोचमानम्*,
उ०सा०-१०।८५।५, ८९।९, स्क०वे०-१।६।१, वे०-२।२।८, २९।६, ३१।६, ५।१२।६, वे०सा०-१।१४६।२, २।१०।२, १५।३, ३१।२१, ३।१।४, ७।५, ४।२।३, ६।९, १५।६, ४३।६, ५८।७, ५।१।५, १२।२, ४८।६, ४९।२, ३, ७।३।३, १६।२, ३, ४२।२, ७१।१, ७५।६, ९७।६, ८।३४।१७, ६९।१६, ९।८।६, २५।५, ६१।२१, ७१।७, ८२।१, ८९।३, १११।१, १०।१।६, ७३।९, ४५।७, वे०सा०मु०-१।११४।५, ११८।५, सा०- ९।७४।१, १०।२०।९, ९२।२, सा०मु०-१।९४।१०, ५।८।१, ४३।१२, ४७।३, ५६।७, ५९।५, ७३।५, ६।३।६,
२. *आरोचमानः सर्वेषां प्रीतिकरः*,
वे०- ४।६।९ (आरोचनशीलाः),
सा०-३।२९।६,
३. *रोचमानेन*,
वे०सा०-६।२७।७, सा०-२।२।८, ३।३१।३, सा०मु०-५।१२।६, मु०-५।१२।२
४. *दीप्तम्*,
स्क०-१।६।१, ३६।९
५. *आरोचनस्य*,
वे०-६।८।१
७. *आरोचनवर्णाः*,
उ०-१०।४५।७, स्क०-१०।४३।९,
८. *गमनशीलम्*,
स्क०-१।११८।५, वे०सा०-९।७२।१, ७४।१ सा०-१।१४१।८, सा०मु०-१।३६।९,
९. *गन्ता*,
स्क०- १।११४।५, ५।५९।५, ६।४९।२, ३, स्क०वे०- १।३६।९, ९४।१०,
१०. *गन्ता। सर्वत्रप्रतिहतगतिरित्यर्थः*,
स्क०-६।४८।६
११. *अरोषणम्*,
सा०-१।३६।९
१२. *हिंसकरहिताग्निरूपेणावस्थितम्*,
सा०मु०-१।६।१
१३. *हिंसकरहिता*,
सा०-१।११८।५
१४. *रुषा हिंसकाः तद्रहितस्य। शत्रु-राहित्येन रोचमानस्य*,
सा०-३।७।५
१५. *रोषरहितः*,
सा०-६।३।६

**अरुषी**

१. *आरोचमानाः*,
वे०-१।१४।१२, ७१।१, वे०सा०-८।६८।१८, ६९।५, १०।५।५, वे०सा० मु०-१।९२।१, २, सा०- १।७२।१०

२. *आरोचमाने उषः कालाभिमानिनि देवते,*
सा० मु०-१।३०।२१
३. *शुक्लतया आरोचमाना,*
सा०-३।५५।११
४. *आरोचमानाभिर्दीप्तिभिः,*
वे०सा०-९।१११।२
५. *आरोचने,*
उ०- १०।५।५, वे०-१।३०।२१,
६. *आरोचनशीलाम्,*
वे०-१।७१।१
७. *अहर्नाम,*
वे०- ३।५५।११
८. *रोचमाना,*
वे०सा०- ४।५२।२
९. *वडवाः,*
मु०-५।५६।६
१०. *आरोचमाना वडवाः,*
वे०सा०-५।५६।६
११. *दीप्ते,*
स्क०-१।३०।२१
१२. *बलवत्वाद् दीप्ताः,*
स्क०-१।१४।१२
१३. *गन्त्रीः,*
स्क०-१।१४।१२, ३०।२१
१४. *गमनस्वभाविकाम्,*
स्क०-१।७१।१, ९२।१, २
१५. *गतिमतीः,*
सा०मु०-१।१४।१२
१६. *शुभ्ररूपयुक्ताम्,*
सा०-१।७१।१
१७. *निर्मलरूपाः,*
सा०-३।२९।३
२. *आरोचमानतेजः सङ्घातः,*
वे०-२।२९।२

अरूक्षित

१. *कल्याणम्,*
वे०-४।११।१
२. *स्निग्धम्,*
सा०-४।११।१

अरेणु

१. *रेणुवर्जिताः,*
वे०-१।३५।११, ५६।३, १६८।४, ६।६२।६, ६६।२
२. *रेणुरहिताः,*
सा०-६।६६।२
३. *पांसुवर्जिताः,*
स्क०-१।३५।११, वे०-१।१६३
४. *धूलिरहिताः,*
सा०मु०-१।३५।११
५. *धूलिवर्जितैः। अमलिनैः,*
स्क०-६।६२।६, ६६।२ (धूलिवर्जितैः)
६. *अनवद्यम्,*
सा०-१।१५१।५, सा०मु०-१।५६।३
७. *तस्कराद्यनपाहरेण अनष्टा,*
सा०-१।१५१।५
८. *अक्षयाः,*
वे०-१।१५१।५
९. *अपापैः,*
सा०-१।१६३।६, १६८।४
१०. *अहिंस्यमानाः प्रबला असुराः,*
सा०-१०।१४३।२

अरेपस्

१. *अपापाः,*
उ०-१०।७८।१, स्क०वे०सा०मु०-१।५७।४, ६१।१४, वे०-१।६४।२, ५।५१।६, ५३।३, ६।३।३, ९।१०१।१०, वे०सा०-१०।१०५।१०, वे०सा०मु०-१।७३।४,

२. अपापौ। आथर्वणस्य गुरोः शिरश्छेदनादिना पापलेपरहिताविति भावः,
सा०-१।१८१।४
३. अपापं सुखकरम्,
सा०मु०-५।७३।६
४. अपापया निर्मलया,
सा०-१।१२४।६
५. अपापाः। यथा प्रतिग्रहार्थमन्यत्रागत्वा स्वगृह एवानुतिष्ठन्तो निर्दोषा भवन्ति तादृशा इत्यर्थः,
सा०-१०।७८।१
६. अपापां वृष्ट्यविघातिनीम्,
सा०मु०-५।६३।६
७. पापरहिताः,
स्क०-१।६४।२, सा०-९।७०।८, १०१।१०, १०।९१।४, सा०मु०-६।३।३
८. पापवर्जिताः,
स्क०-१।६४।२
९. उज्ज्वलया,
वे०-१।१२४
१०. पापेनालिप्यमानया,
वे०-१।१८१।४
११. निर्मलम्,
वे०-४।१०।६, ५।६३।६
१२. अहिंसकौ,
सा०मु०-५।५१।६
१३. अलेपाः,
सा०-५।५३।३
१४. गतिरहितम्, पात्रे स्थितम्,
सा०-९।७०।८

**अव√मिह्**

१. अव वर्षन्ति,
वे०-९।७४।४
२. अवस्ताद्वर्तमानं पार्थिवमुदकं वर्षन्ति,
सा०-९।७४।४

**अवमार्जन**

अङ्गसंशोधकानि स्थानानि,
सा०-१।१६३।५

**अव√यज्**

१. नाशयति,
सा०-१।१३३।७। ४।१।५ (विनाशयति)
२. अधः करोति,
वे०-१।१३३।७
३. पृथक्करोतु ...विश्लथयतु,
वे०-७।६०।९
४. अवपूर्वो यजतिस्त्यागार्थः,
सा०-७।६०।९

**अवयाः**

१. शत्रूणामवयजनं नाशनम्,
वे०-१।१७३।१२
२. अवयजनम्। अवयुज्य पृथक्कृत्य यजनं हविर्भागोऽस्ति,
सा०-१।१७३।१२
३. शत्रूणां वर्जनाय गन्ता वज्रोऽस्ति,
सा०-१।१७३।१२

**अव√यम्**

१. अधो नियच्छत्यात्मनः,
स्क०-१।५६।१
२. उद्यच्छति,
वे०-१।५६।१
३. पानार्थमुद्धरति,
सा०मु०-१।५६।१

**√अवयास्**

१. अवेजते। क्रोधरहितान् करोति,
वे०-६।६६।५

२. अवेत्येष आ इत्येतस्य स्थाने आयासति क्लेशयति। आगतमात्रेभ्यः एव हविर्ददाति, नैनान् प्रतीक्षयतीत्यर्थः,
स्क०-६।६६।५
३. अवयजते। अपगतक्रोधान् करोति,
सा०-६।६६।५

**अवयात्**

१. अवशब्दोऽपेत्यस्य स्थाने अस्मद्यज्ञादपगच्छताम्,
स्क०-१।९४।१२
२. अधस्तात् आगच्छताम्,
वे०-१।९४।१२
३. अवस्ताद्गच्छतां स्वर्गलोकस्य, धस्तादन्तरिक्षे वर्तमानानाम्,
सा०मु०-१।९४।१२

**अवयात् हेळस्**

१. अपगतक्रोधः,
वे०-१।१७१।६
२. अपगतमन्युः,
सा०-१।१७१।६

**अवयातृ**

१. अभिगन्ता,
वे०-१।१२९।११
२. अधोयापयिता प्रापयितासि,
सा०- १।१२९।११

**अवयान**

अवयापनम्,
वे०-१।१८५।८

**अवयै**

१. अवगच्छते,
वे०-८।४७।१२
२. अस्मान् हिंसितुमवगच्छते,
सा०-८।४७।१२

**अवयुन**

१. प्रज्ञानरहितम्,
वे०-६।२१।३
२. अप्रज्ञानम्। प्रज्ञाननाशनमित्यर्थः,
सा०-६।२१।३

**अवर्ति**

१. वृत्त्यभावात्,
वे०-४।१८।१३
२. अस्माकं वृत्तिहानिम्,
सा०-३।५८।३
३. अजीवनम्,
वे०-३।५८।३
४. जीवनोपायराहित्येन,
सा०-४।१८।१३
५. वर्तिजीवनम्। तदभावोऽवर्तिः,
सा०-५।७६।२

**अवारतस्**

१. अर्वाक् स्वाभिमुखं सर्वतो गच्छति,
उ०-१०।६५।६
२. अप्रार्थनेनैव,
वे०-१०।६५।६, सा०-१०।६५।६
(अवरणेन अप्रार्थनेनैव)

**अवर्**

१. रक्ष,
वे०-१।१३३।६
२. अवस्तात् अवाङ्मुखम्,
सा०-१।१३३।६

**अवर, रा**

१. अपरः,
वे०-१०।५६।७, ८१।१, १२०।७,
२. अपरकालीनानि,
वे०-८।९६।६

३. *अवरकालीनानि पश्चाद्भवानि,*
सा०-८।९६।६
४. *निकृष्टेषु स्वप्रजाभूतेषु मनुष्येषु,*
सा०-१०।५६।६
५. *अल्पं भौमं धनम्,*
सा०-१०।१२०।७
६. *विप्रकृष्टान् भूतान् स्वात्मनाहुतान्,*
सा०-१०।८१।१
७. *अस्मात् अर्वाग्वर्त्तिनः प्राणिनः,*
उ०-१०।८१।१
८. *अग्न्यादिषु,*
वे०सा०-१०।५६।७
९. *पार्थिवोऽग्निर्दैव्यो होता,*
सा०-१०।८८।१७
१०. *पार्थिवान्,*
वे०- ९।९७।१७। सा०-९।९७।१७
(अवरदेशे स्थितान् पार्थिवान्)
११. *अन्यानस्मदीयान्,*
सा०-८।७५।१५
१२. *दुर्बलैर्वारयितुमशक्यानि,*
वे०सा०-९।९६।७
१३. *अवाङ्मुखम्। अस्मदभिमुख-मित्यर्थः,*
सा०-१०।५५।४
१४. *उन्मुखम्,*
वे०-१०।५५।४
१५. *आत्माभिमुखान्,*
वे०-२।३४।१४
१६. *अर्वाचीनाः मनुष्याः,*
सा०-६।२१।६
१७. *ओषधीषु,*
वे०-१।१४१।५
१८. *निकृष्टः,*
सा०-१।१६३।९, २।२४।११, ४।२५।८, ९।८८।१९, १०।१५।१
१९. *पूर्वापेक्षया निकृष्टासु पश्चाद्भा-विनीष्वोषधीषु,*
सा०-१।१४१।५
२०. *निकृष्टं नाम पौत्रसंज्ञम्,*
सा०-१।१५५।३
२१. *न्यूने,*
वे०-२।२४।११
२२. *गुह्यम्,*
वे०-१।१५५।३
२३. *अधमाः,*
सा०-२।१२।८
२४. *उभये,*
वे०-२।१२।८
२५. *अवाङ्भागः आदिश्च,*
सा०-१।१६८।६
२६. *द्युलोकादधस्तने,*
सा०-२।९।३
२७. *मुख्यान्,*
सा०-२।३४।१४

**अवरम्बमाणः**
१. *अवलम्बमानः,*
वे०-८।१।३४
२. *अतिदीर्घत्वेनावाङ्मुखं लम्बमानः ...उरू प्रत्यवलम्बमानः,*
वे०-८।१।३४

**अवरुद्ध, द्धा**
*पञ्जरेणावृतः परिवेष्टितः,*
उ०सा०-१०।२८।१०

**अवरोधन**
१. *भूतानां प्रवेशनम्,*
सा०-९।११३।८
२. *अवरुणद्धि आदित्यो भूतानि प्रवेशयति,*
वे०-९।११३।८

**अवरोहत्**

*विमुञ्चन्,*
सा०-५।७८।४

**अवर्त्र**

*१. अवारणीयः,*
वे०-६।१२।३
*२. केनाप्यवारणीयः,*
सा०-६।१२।३

**अव√वा**

*१. वननीयगमनोऽधो गच्छति,*
वे०-१।५८।५
*२. गच्छति,*
वे०सा०-१०।६०।११
*३. व्याप्नोति,*
सा०मु०-१।५८।५

**अव√वी**

*१. अभि गच्छति,*
उ०सा०-१०।२३।४
*२. अव गच्छति,*
वे०-१०।२३।४

**अव√व्यध्**

*अवाङ्मुखान् कृत्वा ताडयति,*
सा०-९।७३।८

**अव-विद्ध**

*१. अपविद्धम्,*
वे०-१।१८२।६
*२. अवस्ताच्छत्रुभिः पातितम्,*
सा०-१।१८२।६
*३. विक्षिप्तम्,*
सा०-७।६९।७

**अव-व्ययत्**

*अवाचीनं यथा भवति तथा संवृण्वन्। तिरस्कुर्वनित्यर्थः,*
सा०-४।१३।४

**अव√व्रश्च**

*१. अवच्छिन्धि,*
स्क०-१।५१।७
*२. अववृक्तवान्,*
सा०-७।१८।१७
*३. छेदनं कुरु ,*
सा०मु०-१।५१।७

**अव√शो**

*अत्यर्थं तनूकुरु। विनाशयेत्यर्थः,*
सा०-१०।१०५।८

**अव√श्रथ्**

*१. अव श्लथय,*
वे०-१।२४।१५
*२. अधस्तादवकृष्य शिथिलीकुरु,*
सा०मु०-१।२४।१५

**अव√श्वि**

*१. अश्वानाम् अरुणवर्णानां समूहे रथे,*
वे०-१।१२४।११
*२. अत्यर्थमागच्छति,*
सा०-१।१२४।११
*३. वर्धते,*
सा०-१।१२४।११

**अवस्**

*१. अधस्तात्,*
स्क०वे०-१।८३।२, वे०-१।१६३।६, ९।७४।
*२. अवस्तात्,*
वे०-१०।२७।२१, वे०सा०-१०।१७।१३, ६७।४ वे०सा०मु०-५।४०।६, सा०-९।७४।६, सा०मु०-१।८३।२
*३. अवस्तात् सामर्थ्यात् भूमेः,*
सा०-१।१६३।६
*४. अवस्तात् अधोदेशे,*
वे०-९।७४।६। (अवस्तात् अधस्तात्),

सा०-१।१६४।१७, १०।२६।२१ (अवस्तादधोभागे स्थितेषु)

*५. अवस्तात् स्थितम्,*

सा०-१।१६४।१८

*६. अवरस्य,*

वे०-१।१६४।१८

*७. अवमश्च, स्वल्पश्च,*

उ०-१०।१७।१३

*८. अवस्तात् भूलोके,*

सा०मु०-६।९।३

*९. पृथिव्यां वर्तमानः,*

वे०-६।९।३

*१०. अन्तरिक्षलोकस्य परस्तादादित्यमण्डले,*

उ०-१०।२७।२१

*११. अन्नाय गोरूपाय,*

वे०-१०।१६९।१ (अन्नाय), सा०- १०।१६९।१

**अवस्तात्**

*१. अधस्तात्,*

सा०-१०।८८।१४

*२. अवरो निकृष्ट आसीत्,*

सा०-१०।१२९।५

*३. सूर्यलोकात् अधस्तात् अन्तरिक्षलोके,*

सा०-३।२२।३

**अवोदेव**

*देवानामवस्तात्,*

सा०-८।१९।१२

**अव-सं√स्वृ**

*१. प्रति सम् गच्छन्ते,*

वे०-९।७३।४

*२. अवस्तात् ...संयोजयति,*

सा०-९।७३।४

**अव√सद्**

*अवतिष्ठस्व,*

सा०-९।९६।१३

**अवसाना**

*१. वस्त्रमनाच्छादयन्तीरपि जलाच्छादनात्,*

वे०- ३।१।६

*२. वस्त्रमनाच्छादयन्त्यः। वस्त्रस्थानीयस्य जलस्य विद्यमानत्वात्,*

सा०-३।१।६

**अव√सृज्**

*१. समर्पय,*

सा०मु०-१।१३।११

*२. अवसृष्टं बन्धनात् विमुक्तं करोतु। विमोकप्रकार एव स्पष्टीक्रियते,*

सा०मु०-१।२४।१३

*३. वृष्टिं कृतवानित्यर्थः क्षिपति पातयति। वर्षतीत्यर्थः,*

स्क०-१।५५।६

*५. अधः पातय,*

सा०मु०-१।८०।४

*६. देहि,*

उ०सा०-१०।६५।१२, स्क०-१।८०।४, सा०- १०।८५।१३

*७. अवाङ्मुखम् अपातयः,*

सा०- १।१७४।४

*८. अवाङ्मुखमसृजत् निरगमयत्,*

सा०-१०।११३।४

*९. अवाङ्मुखं प्रेरयतम्,*

सा०मु०-५।६२।३

*१०. त्याक्षीः, तदधीनं .... कुर्वित्यर्थः,*

सा०-१।१८९।५

*११. प्रयच्छ,*

वे०- १।१८९।५

*१२. अवसर्गो नामाभ्यनुज्ञा। 'जीवत्वयं मास्मैनं मारयत' इत्येवमनुजानीयादित्यर्थः,*
स्क०-१।२४।१३
*१३. नश्यन्तु,*
सा०-५।२।५
*१४. प्रापयन्ति,*
सा०मु०-५।३०।१३
*१५. अधो विसृजसि,*
स्क०-६।४३।३
*१६. विमुञ्च,*
सा०-७।८६।५
*१७. मेघान्निरगमय,*
सा०-१०।१३३।२

**अवसृष्ट**

*१. विमुक्ता,*
सा०-७।४६।३
*२. देवतार्थमवशिष्टाः परित्यक्ताः सन्तोऽश्वमेधे,*
सा०-१०।९१।१४
*३. इन्द्रेण निसृष्टाननुज्ञातान् हविभूर्तान् सोमान्,*
सा०-१०।२८।११
*४. इन्द्रेण निसृष्टान् दत्तान् हविर्भूतान्,*
उ०-१०।२८।११
*५. क्षिप्ता,*
वे०सा०-६।७५।१६

**अव√सो**

*१. अवसन्नो भवति यागार्थम्,*
सा०-१०।६१।२०
*२. विमोचयतु,*
सा०-७।२८।४
*३. विश्रथयतु,*
वे०-७।२८।४
*४. विमुञ्च,*
स्क०-६।४०।१, सा०-४।१६।२
*५. मुञ्च,*
वे०- ६।४०।१
*६. अवस्थापय,*
सा०-६।४०।१

**अवसान**

*दहनस्थानम्,*
सा०-१०।१४।९

**अवसाय**

*विमुच्य,*
स्क०सा०मु०-१।१०४।१

**अवसित**

*१. अवबद्धस्य। स्थावरस्य जङ्गमस्य च इत्यर्थः,*
स्क०-१।३२।१५
*२. निविष्टाः,*
सा०-४।२५।८
*३. एकत्रैव स्थितस्य स्थावरस्य,*
सा०मु०-१।३२।१५

**अवसै**

*१. अवसानात्,*
वे०-३।५३।२०
*२. यावद्रथवेगावसानं तावत्,*
सा०-३।५३।२०

**अव√स्था**

*१. अधो गच्छति,*
वे०-५।४४।९
*२. अवगच्छति,*
सा०मु०-५।४४।९
*३. अवस्थितिं ...कुरुत,*
सा०मु०-५।५३।८

*४. अव तिष्ठत,*
वे०-५।५३।८
*५. प्रति तिष्ठति,*
वे०-८।२४।३०
*६. उपस्थितवान्,*
उ०-१०।४८।५
*७. अवस्थापयति,*
वे०सा०-७।८७।६

**अवतस्थिवस्**
*१. अवस्थितम्,*
वे०-८।९६।१४
*२. उदकस्यान्तरवस्थितम्,*
सा०-८।९६।१४

**अव-स्था**
*१. अकालं विकृता वार्धक्यादयः,*
वे०-५।१९।१
*२. अशोभना दशाः,*
सा०मु०-५।१९।१

**अव√स्पृ**
*१. पालितवान्,*
स्क०-६।४२।४
*२. पालयतु,*
सा०-६।४२।४
*३. बाधां विनाश्य पालय,*
सा०-९।७०।१०
*४. पारय,*
सा०-५।३।९
*५. अवपारय,*
वे०सा०-९।७०।१०, १०।३९।६
*६. अव प्रीणय,*
वे०-५।३।९
*७. अवाङ्मुखं जहि,*
सा०-९।७०।१०

**अवस्पर्तृ**
*१. अवहिंसितः,*
वे०-२।२३।८
*२. उपद्रवेभ्यः पारयितः,*
सा०-२।२३।८
*३. अवसा रक्षणेनापद्भ्यः पारयितः,*
सा०-२।२३।८

**अव√स्मि**
*स्मयन्ते अवाङ्मुखं प्रकाशन्ते,*
सा०-१।१६८।८

**अवस्रस्**
*अवपतनात्,*
सा०-२।१७।५

**अव√स्रु**
*१. अत्यन्तमधो गच्छतु,*
वे०-१।१२९।६
*२. स्वस्थानादवाङ्मुखा भूत्वा गच्छतु अधः पतत्वित्यर्थः,*
सा०-१।१२९।६

**अव√स्वन्**
*अवाङ्मुखं शब्दमकरोत्,*
सा०-४।२७।३

**अव√स्वृ**
*भयं शब्दयति,*
सा०-८।६९।९

**अव√हन्**
*१. चूर्णय,*
सा०-१।१३३।३
*३. अवयुत्य अस्मत्तः पृथक्कृत्य नाशयत,*
सा०-२।३४।९
*३. प्रहरति,*
सा०मु०-१।८०।५

४. अव असृजत,
वे०-२।३४।९
५. अर्वाचीनं कृत्वा हतवानसि,
सा०-४।३०।१४
६. अपनीतवानसि,
वे०-४।३०।१४
७. प्रतिमुखं गत्वा भूम्याम् अचूर्णयत्,
वे०-५।२९।४
८. अवहतवान्,
सा०मु०-५।२९।४
९. अभिहतवानसि,
सा०मु०-५।३२।१
१०. अपनीतवानसि,
वे०-५।४०।६
११. अपहृतवान्,
स्क०-६।३१।४
१२. हतवान्,
उ०-१०।४८।६ (अवदायोद्यम्य वज्रं हतवानस्मि), वे०-५।३२।१, सा०- १०। ४८।६, ७३

**अवघ्नती**

१. हन्यमाना,
वे०-१।१९१।२
२. अवहन्यमानौषधिः,
सा०-१।१९१।२

**अवहन्तृ**

१. अवहन्ता,
वे०-४।२५।६
२. हिंसितैव भवति,
सा०-४।२५।६

**अव√हा**

१. प्रहितवान्,
वे०-१।११६।३
२. अवेत्येप परीत्येतस्य स्थाने। ओहाक् त्यागे। प्रथमपुरुषबहुवचनस्य स्थाने मध्यम पुरुषैकवचनमेतत्। विपन्नावं सन्तं परित्यक्तवन्तः,
स्क०-१।११६।३
३. अवहितो भवामि। नाहं प्रथमक्षान् विसृजामि,
सा०-१०।३४।५
४. अवहितः,
वे०-१०।३४।५
५. अवगच्छामि। उपसर्पामि,
उ०-१०।३४।५
६. नावा गन्तुं पर्यत्याक्षीत्,
सा०मु०-१।११६।३
७. अवहापनं भवत्युपरिस्थितस्याक्षस्य भङ्ग इति,
वे०-३।५३।१९
८. पीपतः,
सा०-३।५३।१९

**अव√हु**

अधोमुखं जुह्वति,
सा०-५।७।५

**अव√हृ**

१. प्रापितवान् ...क्षिप्तवान्,
स्क०- १।३२।९
२. अधस्ताद् वृत्रशरीर एवं वज्रं प्रहृतवान्,
वे०-१।३२।९
३. अधोभागे वृत्रस्योपरि ...प्रहृतवान्,
सा०मु०-१।३२।९

**अव√अज्**

१. विसृजति,
वे०-१।१६१।१०

२. बाह्यभूमिं प्रति गमयति रक्षोभागत्वेन स्थापयति,
सा०-१।१६१।१०

**अवाजिन्**

१. अनश्वम्,
वे०-३।५३।२३
२. वाचामिनो वाजिनः सर्वज्ञः। तद्विलक्षणं मूर्खजनम्,
सा०-३।५३।२३

**अवात, ता**

१. अनभिगतः,
वे०-६।१६।२०, वे०सा०-६।१८।१
२. अन्यैः शत्रुभिरप्रतिगतः,
सा०-६।१६।२०
३. शत्रुभिरहिंसितः,
सा०-६।१८।१
४. अशुष्काः,
सा०-६।६७।७
५. अगतपूर्वाः अन्यदेवतां प्रति याः,
स्क०-६।६७।७
६. अगच्छन्त्यः,
वे०-६।६७।७
७. वान्ति प्रातिकूल्येन गच्छन्तीति वाताः शत्रवः तद्रहिताः,
सा०मु०-१।५२।४
८. वायुनापि निरोद्धुमशक्या इत्यर्थः,
स्क०-१।५२।४
९. गमनरहिताः अपलायितारः,
वे०-१।५२।४
१०. वातं गमनं तद्रहिताः एकपाण्यवस्थानात्,
उ०सा०-१।६२।१०
११. अगतपूर्वा,
स्क०-१।६२।१०
१२. सुश्लिष्टा,
वे०-१।६२।१०
१३. गमनसाधनरहिते देशे,
सा०-६।६४।४
१४. वातरहितेऽपि काले,
स्क०-६।६४।४
१५. सङ्गमनसाधनवर्जिते निरालम्बने देशे,
वे०-६।६४।४
१६. वातवर्जितम्,
वे०-१०।१२९।२
१७. प्राणसंबन्धाभावात्,
सा०-१०।१२९।२
१८. अगमनः,
सा०-८।७९।७
१९. गमनवर्जितः,
वे०-८।७९।७
२०. अन्यैर्गन्तुमशक्यः,
वे०सा०-९।९६।८
२१. तैरभिगतः,
सा०-९।९६।११
२२. तैरनभिगतः,
वे०-९।९६।११

**अवार्यक्रतु**

१. अवार्यकर्माणम्,
वे०-८।९२।८
२. भटैरनिवारणीयकर्माणम्,
सा०-८।९२।८

**अवास्य**

१. विमुच्य,
वे०-१।१४०।१०
२. अपक्षेप्य विहाय,
सा०-१।१४०।१०

**अवि**

*१. पवित्रम्,*
वे०-९।८६।११, ४८, ९१।२, १०७।२
*२. दशापवित्रम्,*
वे०-२।३६।१, ९।५२।२, सा०-९।७८।१ (अविरोमनिर्मितं दशापवित्रम्), ८६।११ (दशापवित्रच्छिद्रैः)
*३. अविमयेन,*
वे०-९।७८।१, सा०-९।९१।२ (अविमयैः पवित्रैः)
*४. अविवालकृतैः,*
सा०-९।१०७।२
*५. अवेर्मेषस्य,*
सा०-८।२।२
*६. अवेर्बालमयैदशापवित्रैः,*
सा०-२।३६।१

**अविका**

*अविजाति .... अवयोः मेषः,*
सा०-१।१२६।७

**अवि-मत्**

*अवयो येषा अस्य सन्ति इति तद्वान्,*
सा०-४।२।५

**अव्य**

*१. अविमयम्,*
वे०-९।६६।९, ६७।५, ९७।३१, वे०सा०- ९।६१।१७, ८८।६ सा०- ९।८६।२५, १०७।१७
*२. अविमये पवित्रे,*
वे०-९।७०।८ (अविमये समुच्छिते पवित्रे), वे०सा०-९।५०।२, १०७।१७,
*३. अविभवः,*
वे०सा०-९।७५।४, सा०-९।९६।३, १३, (अविभवे पवित्रे) ९७।४, ३१, १०९।१६
*४. अवेः स्वभूतेः,*
सा०-९।६९।३
*५. पवित्रम्,*
वे०- ९।१९६।१३, ९८।३, १०९।१६, वे०सा०-९।८६।१३, सा०- ९।९७।४
*६. अविवालम्,*
वे०-९।८६।२५, सा०- ९।६७।५
*७. अविवालभवम्,*
सा०-९।६९।९
*८. अविलालेन कृते पवित्रे,*
सा०-९।६६।९, ७०।८ (अविवालकृते दशापवित्रे)

**अव्यय**

*१. अविमयम्,*
वे०सा०-९।१६।६, ४९।४, ८२।१, ८६।३४, सा०-९।९९।५, १००।४, १०३।३
*२. पवित्रम्,*
वे०- ९।६६।११, ६९।४, ९९।५, १०३।३, ११०।१, वे०सा०- ९।९८।२
*३. अविमयी त्वक् च निर्नेक्ती भवति। तद्धि दशापवित्रापेक्ष्यमभिहितम्,*
सा०-९।७०।७
*४. अविमयमव्यवयवभूतम्,*
सा०-९।६७।२०
*५. अविमयमूर्णास्तुकेन निर्मितं दशा-पवित्रम् ,*
सा०-९।६६।२८
*६. अविमये अविस्वभूते वा,*
सा०-९।६६।११
*७. अविमयं वालम्,*
वे०सा०-९।८६।३१
*८. दशापवित्रम्,*
वे०-९।३७।३
*९. अविमयं समुच्छ्रितं पवित्रम्,*
वे०-९।८६।८

*१०. व्ययरहितमविनश्वरम्,*
सा०-८।९७।२
*११. अच्छिन्नानि व्ययरहिताः,*
सा०-१।१३५।६

**अविक्षित**
*१. अविक्षीणम्,*
वे०सा०-८।३२।८
*२. अविक्षीणा,*
सा०-७।१।२४

**अविचाचलि**
*१. निश्चलः,*
वे०-१०।१७३।२
*२. चलनरहितः,*
सा०-१०।१७३।२
*३. अतिशयेन चलनरहित एव सन्,*
सा०-१०।१७३।१

**अविचेतन**
*विज्ञानरहितानप्रज्ञातानर्थान्,*
वे०सा०-८।१००।१०

**अविचेतस्**
*१. विपरीताः,*
वे०-९।६४।२१
*२. विशिष्टमतयो विचेतसः। अविचेतसो विपरीतमतय इत्यर्थः,*
सा०-८।६४।२१

**अविजानत्**
*अतिगहनं तत्त्वं विशेषेण ज्ञातुमशक्नुवन्,*
सा०-१।१६४।५

**अवितारिणी**
*१. या विविधं न गच्छति तां निश्चलां बुद्धिम्,*
वे०-८।५।६
*२. वितरणं विगमनमपायः। अनपायिनीम्,*
सा०-८।५।६

**अविथुर**
*१. अभीरवः,*
स्क०-१।८७।१
*२. अनेकाकिनः,*
वे०-१।८७।१
*३. अवियुक्ताः,*
सा०-१।८७।१
*४. अवियुक्ताः, सप्तगणसंघीभूताः,*
मु०-१।८७।१

**अविदस्य**
*अनुपक्षपणीयम्,*
सा०-७।३९।६

**अविदीधयु**
*१. दीप्यमानम्,*
वे०-४।३१।७
*२. विदीधयुः अदीप्यमानः। न विदीधयुः अविदीधयुः,*
सा०-४।३१।७

**अविदुष्टर**
*१. अत्यन्तमजानन्तः,*
वे०-१०।२।४
*२. अविद्वत्तरा अत्य मजानन्तः,*
सा०-१०।२।४

**अविद्रिया**
*१. दृ विदारणे। सहयोगलक्षणा चैषा तृतीया अविदारणीभिः अविनाशिनीभिः,*
स्क०-१।४६।१५
*२. रक्षणपरैः,*
वे०-१।४६।१५

*३. प्रशस्ताभिः,*
सा०-१।४६।१५

**अविद्वस्**

*१. अजानन्,*
स्क०- १।१२०।२, मु०-५।३०।३, १०।७९।६,
*२. अजानन् अशाठ्येनेत्यर्थः,*
उ०-१०।७९।६
*३. पूर्वमजानन् जनः,*
सा०-५।३०।३
*४. अज्ञः स्तोता,*
सा०मु०-१।१२०।२
*५. वैदुष्यरहिता अल्पमतयः,*
सा०-६।१५।१०

**अविधवा**

*१. जीवद्भर्तृकाः,*
उ०-१०।१८।७
*२. शोभनपतिकाः,*
वे०-१०।१८।७
*३. धवः पतिः। अविगतपतिकाः। जीवद्भर्तृका इत्यर्थः,*
सा०-१०।१८।७

**अविप्र**

*१. विप्राः मेधाविनः ऋत्विजः, ते यस्य स्तोतुर्न सन्ति सोऽविप्रः,*
स्क०-६।४५।२
*२. विप्रः स्तोता। तद्विलक्षणोऽपि पुरुषे,*
सा०-६।४५।२
*३. अमेधावी,*
सा०-८।६१।९
*४. अस्तुतिकुशलः,*
सा०- ८।६१।९
*५. मेधारहितः,*
वे०-८।६१।९

**अविरण**

*१. अविगतरणाय संग्रामनाशनाय,*
सा०-१।१७४।८
*२. अविरमणाय प्राणिनामविनाशाय,*
सा०-१।१७४।८

**अविवेनत्**

*१. एवेन्द्रम्, अविरूपम् सुष्ठुकामयमानम्*
वे०-४।२४।६
*२. विवेनो विगतेच्छः। तदन्योऽविवेनः। आत्मानं कामयमानम्,*
सा०-४।२४।६

**अविवेनम्**

*१. अविगतकामम्,*
वे०-४।२५।३
*२. अविगतकामम्। यथाकामम्,*
सा०-४।२५।३

**अविशस्तृ**

*१. शस्ता,*
वे०-१।१६२।२०
*२. विशसने अकुशलः शमित,*
सा०-१।१६२।२०

**अविश्वमिन्व-न्वा**

*१. सर्वैश्चाज्ञायमानपरिमाणाम्,*
वे०-१।१६४।१०
*२. असर्वव्यापिनीम्,*
सा०-१।१६४।१०
*३. अपरिच्छिद्यमानम्,*
वे०-२।४०।३
*४. विश्वस्यापरिच्छेद्यम्,*
सा०-२।४०।३

**अविष**

*१. अवनानि पालनानि,*
स्क०-६।३९।५

२. विषवर्जितानि पुष्टिकराणि,
स्क०-६।३९।५
३. विषरहितानि,
सा०-६।३९।५
४. रक्षकाणि,
सा०-६।३९।५
५. महतः प्रीतिकारिणः,
सा०-८।२५।२०

**अविहर्यत-क्रतु**

१. अविगतो हर्यतः कामो यस्य सोऽविहर्यतः कामवान्। क्रतुरिति यज्ञनाम। अविहर्यतः क्रतुर्यस्य सोऽविहर्यतक्रतुः। स्तुतिर्हवींषि च प्रति कामयमानचित्त इत्यर्थः,
स्क०-१।६३।२
२. प्राप्तुमशक्यत्वात् अप्रेप्सनीयः क्रतुः प्रज्ञा कर्म वा यस्य सोऽविहर्यतक्रतुः,
स्क०-१।६३।२
३. प्रेप्सितकर्मन्निन्द्र... विहर्यतोऽनभिलषितः। अविहर्यतोऽभिलषित इत्यर्थः। तादृशः क्रतुः कर्म यस्य स तथोक्त,
सा० - १।६३।२। मु० - १।६३।२ (प्रेप्सितकर्मन्)

**अविह्रुत-ता**

१. अहिंसितम्,
वे०-१०।१७०।१
२. अकुटिलम्,
सा०-१०।१७०।१
३. अबाधितम्,
वे०-५।६६।२
४. अहिंस्यम्,
सा०मु०-५।६६।२

**अवीता**

१. असेविता नवतराः,
वे०-४।४८।१
२. अन्यैः पूर्वमभक्षिताः,
सा०-४।४८।१

**अवीर, रा**

१. अपुत्राः,
वे०-७।४।६, १०।८६।९ सा०-७।४।६ (पुत्रादिरहिताः), ६१।४,
२. अनुत्पादितपुत्राः,
वे०-७।६१।४
३. वीरवर्जिते,
सा०-१०।९५।३
४. वीरेणात्मना वर्जिते,
वे०-१०।९५।३

**अवीरहन्**

१. वीर्यात् जायन्ते इति वीराः पुत्राः। तेषामहन्ता ...वीराणां हन्ता वीरहा। न वीरहा अवीरहा,
सा०-१।९१।१९
२. अहन्ता च वीराणाम्,
स्क०-१।९१।१९
३. पुत्राणामहन्ता,
वे०मु ०- १।९१।१९

**अवृक, का**

१. वृकशब्देनात्र हिंस्त्रप्राणिवचनत्वाद्धि, स्त्रत्वं लक्ष्यते। अहिंस्त्राय,
स्क. १।३१।१३
२. कुक वृक आदाने इत्यस्यैतद्रूपम्। आदातव्यानामदात्रे। स्तोतॄणां यजमानानां च देवहार्यं यद्धनं तस्याप्यनपहर्त्र इत्यर्थः,
स्क०-१।३१।१३

३. कुक वृक आदाने इत्यस्य रूपम्। अवृकम् अनादातृ। अभिप्रेतान् अनपहारकमित्यर्थः,
सा०-६।४८।१८
४. कुक वृक आदाने परैरनादेयम्,
स्क०-१।४८।१५
५. कुक वृक आदाने। आदातृवर्जितानि। अनपहार्याणीत्यथः,
स्क०-१।५५।६
६. वृकेणावरकेण तेन रहितानि,
सा०मु०-१।५५।६
७. वृको हिंसकः शत्र्वादिः। तद्रहितस्य,
सा०-१।१५५।४
८. वृकवर्जितस्य,
वे०- १।५५।४, ७।७४।६
९. वृकरहितः,
वे०- ७।१९।७, १०।३६।३
१०. वृकशब्दोऽयं वृश्चते छेदनार्थस्य। अवृकम् अवृक्णम् अच्छिन्नम्। समनित्यर्थः,
सा०-६।४८।१८
११. वृकसदृशं वृकं हिंसकम्। अवृकम् अहिंसकम्,
सा०-६।४८।१८
१२. अनादातृ। अभिप्रेतान् अनपहारकमित्यर्थः,
सा०-६।४८।१८
१३. वृको हिंसकः शत्र्वादिः। तद्रहितस्य,
सा०-१।१५५।४
१४. अहिंसकाय,
सा०-४।४।१२, सा०मु०-१।३१।१३
१५. हिंसकरहितम्,
सा०-२।३१।३, सा०मु०-१।४८।१५, ६।२।२
१६. हिंसारहितः,
सा०-४।१६।१८
१७. बाधकरहितः,
सा०-६।१५।३, ७।१९।७। ८।९।१, १०।३६।३, १४४।५
१८. बाधकरहितं सर्वदा ऐक्यरूपेण वर्तमानम्,
सा०-६।४८।१८
१९. वृकशब्दोऽयं वृश्चतेः छेदनार्थस्य। अवृकम्, अवृक्णम् अच्छिन्नम्। समनित्यर्थः,
सा०-६।४८।१८
२०. मरुद्भिः,
वे०-२।३१।३
२१. स्तेनरहितम्,
वे०-१।४८।१५, ४।४।१२, ६।४।४, १५।३, ८।९।१
२२. वृकाः स्तेनाः तद्रहितैः वृकः स्तेनः। तद्रहितम्। बाधारहितमित्यर्थः,
वे०-८।२७।४ (अस्तेनैः), सा०-८।२७।४, सा०वे०मु०-६।४।८
२३. स्तेनवर्जितानि,
वे०-१।५५।६, ६।२।२, ७।६६।८, ८८।५
२४. अहिंस्याय,
सा०-७।६६।८, ८८।५ (अहिंस्यमात्यन्तिकम्)
२५. हिंसारहितम्,
वे०-१०।१४४।
२६. परकीयधनस्यानादातारः,
सा०-७।७४।६
२७. निजेन निरतिशयेन ऐश्वर्येण युक्तत्वाद् अन्यतः कस्यचिदर्थस्य अनादातृ,
उ०-१०।३६।३

२८. *वृकवदरण्यश्ववदस्मासु हिंसामकुर्वन्तः,*
सा०-१०।१५।१
२९. *अनमित्राः,*
वे०-१०।१५।१
३०. *रक्षोवर्जिताय,*
वे०- १।३१।१३, ४।१६।१८
३१. *राक्षसादिभिर्बाधकैर्वियुक्तेऽस्मदीये अग्न्यागारे,*
सा०मु०-६।४।४

**अवृकतम**

१. *अस्तेनतमः,*
वे०-१।१७४।१०
२. *दातृतमः,*
सा०-१।१७४।१०

**अवृजिन**

१. *अवद्यरहिताः,*
वे०-२।२७।२
२. *अवर्जितारः सर्वानुग्राहकाः,*
सा०-२।२७।२

**अवृत**

१. *शत्रुभिरपरिवृतः,*
वे०-१।१३३।७, वे०सा०-८।३३।६, १० (अपरिवृतः)
२. *परैरनाक्रान्तः सन्,*
सा०-१।३३।७
३. *रक्षः प्रभृतिभिरनाच्छादितम्,*
सा०-६।१४।५
४. *अनावृतः,*
वे०-६।१४।५, वे०सा०-८।१०२।१४

**अवृद्ध**

१. *अवर्धयितॄन्,*
वे०-७।६।३
२. *स्तुतिभिरग्निमवर्धयतः,*
सा०-७।६।३

**अव√इ**

१. *गच्छति,*
वे०-१।१६४।५१
२. *अवाङ्मुखं गच्छति,*
सा०-१।१६४।५१
३. *अवगच्छति,*
वे०-५।७८।८, सा०मु०-५।३७।२, ४९।५
४. *अवगमयति,*
वे०- ५।३७।२
५. *अपगच्छतु,*
वे०-५।४९।५
६. *निर्गच्छ,*
सा०मु०-५।७८।८

**अवायती**

१. *अवगच्छन्ती,*
वे०-८।९१।१
२. *स्नानार्थमभ्यवगच्छन्ती,*
सा०-८।९१।१

**अव√ई**

१. *अपगच्छतु,*
वे०-७।५८।५
२. *स्तोत्रेण वयमपनयामः,*
सा०-७।५८।५
३. *अवगच्छति,*
वे०सा०-८।४।३
४. *उपगच्छेयम्,*
सा०-७।८६।४
५. *अभिमुखं गच्छामि,*
वे०-७।८६।४
६. *अवनयामः,*
सा०मु०-१।२४।१४

*७. अपनयामः,*
स्क०-१।२४।१४
*८. विनाशयामः,*
वे०-१।२४।१४

**अवेनत्**

*१. गर्भवासमकामयमानः,*
उ०-१०।२७।१६
*२. आत्मानमकामयमानम्,*
वे०-१०।२७।६
*३. निवासमकामयमानम्,*
सा०-१०।२७।१६

**अव√इन्व्**

*१. अपक्षारयतम्,*
वे०-७।६४।२
*२. अवस्तात् प्रेरयतम्,*
सा०- ७।६४।२

**अव√ईश्**

*वेक्षसे,*
सा०-८।७९।९

**अव्यती**

*सपत्नीभिः सह पर्यायेण पतिमागच्छति सा व्यती। न तादृश्यव्यती।,*
सा०-१०।९५।५

**अव्यथि**

*१. व्यथारहिताभिर्नौभिः,*
सा०मु०-१।११२।६
*२. अकम्पिताभिः,*
वे०-१।११२।६
*३. अभयरूपाभिर्भयव्यावर्तिनीभिरूतिभिः,*
स्क०-१।११२।६
*४. नौभिः सामर्थ्यात्,*
स्क०-१।११२।६
*५. अव्यथाम्,*
वे०-१।११७।१५
*६. व्यथारहितैः,*
वे०-७।६९।७, ८।२।२४, वे०सा०-९।४८।३
*७. व्यथां पीडाम् अप्राप्त एव सन्,*
सा०मु०-१।११७।१५
*८. अविकलचित्तः। स्थिरयुष्मद्भक्तिरित्यर्थः,*
स्क०-१।११७।१५
*९. सुखकरेषु स्तोतृषु,*
सा०-८।२।२४

**अव्यथिया**

*व्यथारहिताः,*
उ०वे०सा०-१०।२७।२१

**अव्यथ्य**

*अव्यथनीयाय,*
वे०-२।३५।५

**अव्यनत्**

*विविधमनितिश्वसितीति,*
सा०- १०।१२०।२

**अव्रत, ता**

*१. अयजमानान्,*
वे०-१।३३।५, १०१।२, १३०।८, १३२।४, १७५।३, ९।७३।५, वे०सा०-९।७३।८
*२. व्रतरहितान् वृत्रानुचरान्,*
सा०मु०-१।३३।५
*३. अव्रतान्,*
वे०-१।५१।८
*४. अकर्मणः अयष्टॄन्,*
स्क०- १।३३।५

५. अयष्टारम् ...अकर्माणम्,
सा०-१।१३२।४
६. कर्मरहितान् यजमानान्,
सा०-९।७३।५
७. व्रतमितिकर्मनाम। कर्मविरोधिनस्तान् दस्यून्,
सा० - १।५१।८, मु०-१।५१।८ (कर्म-विरोधिनस्तान् दस्यून्)
८. व्रतमिति कर्मनाम। तद्रहितान् याग-विद्वेषिणः,
सा०-१।१३०।८
९. अकर्मणः यागकर्मवर्जितान्। अयष्टॄनित्यर्थः,
स्क०-१।५१।८
१०. व्रतस्य यागदेः कर्मणो विरोधिनम्,
सा०मु०-१।१०१।२
११. अकर्माणम्। भयान्निश्चेष्टमित्यर्थः,
स्क०-१।१०१।२
१२. अकर्माणमननुष्ठायिनम्,
सा०-१।१७५।३
१३. अकर्माणम्,
वे०सा०-९।४१।२
१४. व्रतरहितः कर्मरहितो भूत्वा,
सा०-८।९७।३

√अर्च्

१. अर्चति,
वे०-१।६।८, १०।१, ५२।१५, ९२।१३, १६५।१४, १६६।७, वे०सा०-१।१७३।२, २।१७।१, ५।२९।६, २९।१२, ४५।७, ६।२१।६, २१।१०, ५०।६, ५०।१५, ८।४०।४, ९२।१९, ९३।२६, ९।९७।४, १०।१३३।१, सा०-१।१७२।२
२. अर्चन्ति कुर्वन्ति,
वे०-३।१४।४
३. अर्चन्ति अभिषुण्वन्ति,
वे०-५।३१।५
४. अभ्यर्चत ...यद्वा ...अभिष्टुम,
सा०-९।९७।४
५. उपार्चत,
वे०-१०।९६।२
६. विशेषेणार्चति। सोमपाने श्रद्धां करोति,
सा०-४।१६।३
७. नभः प्रदेशं पूजयन्ति। कृत्स्नं जगद्युगपदेव व्याप्नुवन्तीत्यर्थः,
सा०मु०-१।९२।३
८. पूजयति,
उ०वे०सा०-१०।३६।५,वे०-१।१५१।६, १६५।१, ५।२९।१, वे०सा०-१०।१४८।३, सा०-१।१३२।५, ३।४४।२, ८।४०।४, ९२।१९, ९३।२६, १०।९६।२, १३३।१, १४७।३, १६५।१ सा०मु०-५।४५।७, १।५१।१, ५२।१५, ५४।२, ८०।९, ८४।५, मु०-१।६।८
९. अर्च पूजायाम्। पूजयन्त्युषसः। प्रकाशत्वापादनेनाभिपूजितं कुर्वन्तीत्यर्थः,
स्क०-१।९२।३
१०. पूजयति। अतिशयेन प्रीणयतीत्यर्थः,
सा०-१।६।८
११. पूजयथ। स्वीकुरुथ इत्यर्थः,
सा०-१।१५१।६
१२. पूजयन्ति। जगति कुर्वन्ति यद्वा मम बलं वर्धयन्ति,
सा०-१।१६५।१
१३. पूजयन्ति। स्तुत्यादिना संभावयन्तीत्यर्थः,
सा०-१।१६६।७

**१४. पूजयाम। शंसामेत्यर्थः,**
सा०-१।१७३।१
**१५. अभिपूजयामि। स्तौमीत्यर्थः,**
सा०मु०-५।४१।८
**१६. पूजय। विधेहि,**
सा०-१०।११२।९
**१७. स्तौति,**
उ०वे०सा०- १०।१२।४, ६४।३, स्क०-१।६।८, ९।१०, स्क०वे०- १।५१।१, ५२।१५, ५४।२, ८०।९, स्क०वे० सा०मु०- १।१०१।७, स्क०सा०- ६। ५०।६, १५, वे०-१।८४।५, ५।४१।८, १०, १०।१४७।३, १६५।१, वे०सा०-१।१३८।१, ८।२३।२४, ४१।१, १०।१।३, १०।७६।५, ९४।७, सा०-४।१।१४, ६।२१।६, सा०वे०- ६। २२।१, सा०मु०-५।२९।१, २९।२, ६, १२, मु०- ५।३०।६
**१८. स्तौति। इन्द्रस्य पराक्रमं प्रशंसति इत्यर्थः,**
सा०-१।९।१०
**१९. स्तोत्र कुरु,**
मु०-१।५४।२
**२०. स्तुवन्ति कुर्वन्तीत्यर्थः,**
सा०-५।३०।६, ३१।५
**२१. उच्चारयति,**
स्क०- १।८४।५, स्क०वे०सा०मु०-१।५४।३, वे०- १।१६५।१४, ३।५४।२, ४।४।८, ७।२२।३ वे०सा०-९।११।४, १०।८९।३,
**२२. अर्चतिरुच्चारणकर्मा। शङ्खमार्चन जयार्थं ध्मापितवन्तः,**
वे०- ४।१।१४
**२३. वदति,**
वे०-१।९।१०, सा०-७।२२।३
**२४. अर्चतिकर्मत्वाद् अर्चतिः स्तुत्यर्थः। तेनाप्युच्चारणं लक्ष्यते। उच्चारयत स्तुतिशस्त्रलक्षणाः,**
स्क०-६।४५।४
**२५. प्रशंसति, अनुशंसति, शंसति,**
वे०-१।१७३।१, वे०सा०-६।४५।४, सा०मु०- १।१०।१, मु०-१।९।१०,
**२६. ब्रवीति,**
वे०- १०।११२।९, सा०-२।१७।१,
**२७. प्रयच्छति,**
वे०-१।१३२।५,
**२८. ददाति,**
उ०-१०।६४।९, सा०मु०-५।५४।१
**२९. श्रद्धते,**
वे०-४।१६।३
**३०. वहति,**
सा०-३।१४।४

## अर्क

**१. अर्चनीयम्,**
स्क०सा०- ६।६५।५, वे०सा०मु०- १। १०।१, ८५।२, वे०-५।५७।५, ८।६३। ४, १०।१५३।४, वे०सा०-६।४९।८, ९।२५।६, ९२।१९, १०।६८।४, १०७।४, ११४।१ सा०-२।११।५, ३।२६।७, ८, ३१।११, ६।३।८, ७।९।२, ६२।३, ८।१०१।१४, ८८।४, ९।५०।४, मु०-५।४१।७
**२. स्तुत्यम्,**
सा०-१०।१५३।४
**३. स्तोतव्यः,**
वे०-३।२६।७
**४. पूज्यम्,**
स्क०सा०मु०-५।५७।५, वे०-३।२६।८

५. मन्त्रः,
उ०वे०-१०।६।४, स्क०- १।६२।७, ११, ८८।४, स्क०वे०- १।३३।२, ६।५०।१५, ८।८८।४, ८९।६, ९।७३।२, वे०- १।१४१।१३, १६४।२४, १९०।१, ४।३।१५, १०।३, ५।३१।४, १०।६७।५, वे०सा०- ६।२१।४, ९।९७।३५, सा०-१।१७६।५, ४।४४।३, ५५।३, ५६।१, ५६।२, ५।४१।७, १०।१४८।५

६. *अर्चनसाधनैर्मन्त्रैः,*
सा०-१।१४१।१३, १६४।२४, १९०।१, ६।५०।१५, (अर्चनसाधनैः), सा०मु०-५।४१।६,

७. *अर्चनीयो मन्त्रः,*
सा०-८।८९।६, १०।६७।५, ११६।९

८. *ऋग्रूपैर्मन्त्रैः*
स्क०-१।७।१। (मन्त्रैः ऋग्लक्षणैः), वे०-८।१६।९ (ऋग्भिः), सा०मु०-१।७।१

९. *मन्त्रैः ...यजुर्लक्षणैः,*
स्क०-१।४७।१०। सा०-८।१६।९ (अर्चनसाधनैर्यजूरूपर्मन्त्रैः)

१०. *स्तुतिरूपं मन्त्रम्,*
स्क०- ६।६६।९ (स्तुतिलक्षणं मन्त्रम्), सा०मु०- १।६१।५, ६२।७,

११. *शस्त्रम्,*
उ०-१०।६।४, वे०- १।७।१, ४७।१०, सा०-३।५४।१४ (अर्चनीयैः शस्त्रैः) ४।३।१५ (अर्चनीयैः शस्त्रैः), ८।१२।२३ (अर्चनसाधनैः शस्त्रैः), १२।२३ (अर्चनसाधनैः शस्त्रैः), सा०मु०-१।६२।११ (शस्त्ररूपैर्मन्त्रैः)

१२. *स्तोत्रम्,*
वे०-१।६१।५, ८, ६२।१, ७, ८८।४, १६६।७, १७६।५, ३।३१।९, ११, ४।४४।३, ५५।३, ५।२९।१२, ३०।६, ३३।२, ४१।७, ६।२१।१०, १०।७८।४, ११६।९।१४८।५ सा० - १।१३१।६, १०।६।४, सा०मु० - १।३३।२, ५।३१।४,५,

१३. *अर्चनसाधनैः स्तोत्रैः,*
सा०-३।३१।९, ६२।५, ४।१०।३, सा०-६।२१।१०, ७।२३।६, ९।७३।२, १०।१५।९। १५७।५, सा०मु०-१।४७।१०, ६१।८, ५।२९।१२, ३०।६, ३३।२, ६।५।५

१४. *मन्त्ररूपं स्तोत्रम्,*
सा०-१।६२।१, सा०मु०-१।८८।४, (मन्त्रसाध्यैः स्तोत्रैः)

१५. *स्तोत्रशस्त्राणि,*
वे०-३।५४।१४, ६।५।५

१६. *अन्नम्,*
वे०-१।६२।११, १८६।४, २।११।१५, ४।५६।१, २, ६।४।६, ६६।९, १०।११२।९। वे०सा०-७।३९।७, ६२।३, ९७।५, सा०- ७।४०।७, ८।६३।४

१७. *अर्चनीयमन्नं चरुपुरोडाशादिकम्,*
सा०-१।१८६।४

१८. *हविर्भिः,*
सा०-३।६२।५, वे०-६।६५।५,

१९. *हविर्लक्षणन्नम्,*
वे०-६।२०।१३, स्क०-६।६६।९

२०. *स्तोता,*
उ० वे०सा०-१०।६८।१, स्क०-१।८३।६, वे०-८।८८।४, वे०सा०-७।२४।५, सा०-५।५।४,

२१. *स्तोत्रनिष्पादकः,*
सा०मु०-१।८३।६

२२. *अर्चनसाधनमन्त्रोपेतः स्तोता,*
सा०-१।१६७।६

*२३. अर्चनीयं स्तोत्रमभिस्वर्तारोऽभितः शब्दयितारो बन्दिनः इव,*
सा०-१०।७८।४
*२४. होता,*
वे०-१।१६७।६, वे०सा०मु०-१।८३।६,
*२५. देवम्,*
उ०-१०।७८।४, स्क०-१।१०।१, ६।४९।८,
*२६. पूषणम्,*
वे०सा०-६।४९।८
*२७. देवो बृहस्पतिः,*
उ०-१०।६८।४
*२८. तेजोभिः,*
वे०-६।३।८, वे०सा०-१०।६८।९, सा०-३।३४।१, ६१।६, ९।९७।३१
*२९. ज्योतिषा,*
उ०-१०।६८।९
*३०. दीप्तिभिः,*
मु०-६।३।८
*३१. स्तुतिभिः,*
वे०-३।३४।१, ६१, ६, १०।१५।९
*३२. रश्मिभिः,*
वे०सा०-४।१६।४, १०।६८।६
*३३. किरणैः,*
सा०मु०-६।४।६
*३४. अर्चनीयग्रहनक्षत्रतारादिजातम्,*
उ०-१०।६७।५
*३५. गवां संघम्,*
सा०-७।९।२
*३६. उदकम्,*
सा०मु०-१।१९।४

**अर्कशोक**

*१. अर्चनीयै पूजनीयैः शोकैर्दीप्तिभिर्युक्तम्,*
सा०-६।४।७
*२. अर्चनीयैर्दीप्तिभियुक्तम्,*
मु०- ६।४।७
*३. अर्चनीयैः तेजोभिः,*
वे०-६।४।७

**अर्कसाति**

*१. अर्चनीयस्यान्नस्य नाथे निमित्तभूते सति,*
सा०-१।१७४।७
*२. अन्नभजननिमित्तम्,*
वे०-१।१७४।७
*३. अर्कोऽन्नं प्राप्यतेऽस्मिन्नित्यर्कसातिर्युद्धम्,*
सा०-६।२०।४
*४. अन्तलाभार्थम्,*
सा०-६।२६।३
*५. युद्धे,*
वे०-६।२०।४, २६।३

**अर्किन्**

*१. होतारः,*
वे०-१।७।१, १०।१
*२. मन्त्रवन्तो होतारः,*
स्क० - १।७।१, १०।१ (मन्त्रोऽत्रर्क उच्यते। तद्वन्तः होतारः)
*३. अर्चनहेतुमन्त्रोपेता होतारः,*
सा०मु०-१।७।१, १०।१ (अर्चनहेतु-मन्त्रयुक्ताः होतारः)
*४. स्तोतृप्रयुक्तैर्गुणैर्मन्त्रवन्तम्,*
स्क०-१।३८।१५
*५. अन्नवन्तम्,*
स्क०-१।३८।१५
*६. स्तुतिकामम्,*
वे०-१।३८।१५

**अर्किणी**

*स्तुतिमती,*
वे०सा०-८।१०१।१३

**अर्चत्**

*१. पूजयन्तः,*
वे०- ३।३२।३, सा०-३।३१।७, ८।२९।१० सा०मु०-१।६२।२, ८५।२, १५१।२, ५।१३।१,
*२. पूजयन्। स्वस्य स्वामित्वं प्रकटयन्,*
सा०मु०-१।८०।१
*३. अनुपूजयन्,*
स्क०-१।८०।१
*४. हविर्भिः पूजयते,*
सा०-१।८७।२
*५. स्तुवन्तः,*
स्क०वे०-१।६२।२, वे०सा०-७।२८।५, १०।८९।१६, वे०सा०मु०-५।६४।२, ७।२२।४, सा०-३।३२।३
*६. स्तोतुरर्थाय,*
स्क०-१।८७।२
*७. परिचरते,*
वे०-१।८७।२
*८. ब्रुवतः,*
वे०-७।२२।४
*९. पूजयतः,*
सा०-१।१५१।२, सा०मु०-५।१३।१

**अर्चद्-धूम**

*१. अर्चन्तः अर्चनीया धूमाः,*
सा०-१०।४६।७
*२. धूमोपलक्षिता ज्वाला येषां ते,*
सा०-१०।४६।७
*३. अर्चिष्मद्धूमाः,*
उ०-१०।४६।७
*४. निर्गच्छद्धूमाः,*
वे०-१०।४६।७

**अर्चत्र्य**

*अर्चनीयः,*
वे०सा०-६।२४।१

**अर्चत्रि**

*१. अर्चनीयाः,*
वे०सा०-६।६६।१०
*२. अर्चनीय अत्रिभिः,*
स्क०-६।६६।१०

**अर्चि**

*१. रश्मयः,*
सा०-४।६।१०, ५।६।७, वे०सा०- ५।२५।८, ९।६६।५, वे०सा०मु०-५।१०।५,
*२. दीप्तयः,*
स्क०-६।४८।७ (दीप्तिभिः ज्वालाख्याभिः), वे०-६।४८।७, वे०सा०मु०-१।४४।१२, सा०-८।४४।४, १०।१४०।१, सा०मु०-१।३६।३, ५।१७।३,
*३. ज्वालाः,*
स्क०-१।३६।३, ४४।१२ स्क०सा०मु०-१।३६।२०
*४. प्रभाः,*
सा०-८।४४।१७
*५. तेजोभिः,*
सा०मु०-५।७९।८
*६. प्रकाशाः,*
सा०मु०-१।४८।१३

**अर्चिन्**

*१. दीप्तयः,*
वे०-५।४५।१
*२. सर्वं जगत् पूजयन्तः,*
सा०-२।३४।१, सा०मु०-५।४५।१

**अर्चिस्**

*१. तेजः,*
वे०-१।१५७।१, ६।४८।३, वे०सा०-३।६।३, ४।७।९, ८।७।३६, १०।८८।९, १२, सा०-८।४३।८, ९।६७।२३, १०।८७।११, १४, १७, सा०मु०-१।९२।५, ५।७९।९
*२. प्रकृष्टेन तेजसा,*
सा०-१।१५७।१
*३. सौरवैद्युतादितेजसि,*
सा०-९।६७।२३
*४. दीप्तिः,*
स्क० सा०-६।४८।३, वे०-१।९२।५, सा०-१०।१४२।६
*५. प्रभया,*
सा०मु०-५।१७।३
*६. ज्वालया रश्मिसमूहेन,*
सा०-२।८।४
*७. ज्वालारूपेण तेजसा,*
सा०-६।६०।१०
*८. भासको ज्वालाविशेषः,*
सा०-१०।१६।४
*९. ज्वालालक्षणः,*
उ०-१०।१६।४, वे०सा०- १०।८७।२ (ज्वालया)
*१०. ज्योतिषा,*
स्क०-६।६०।१०

**अर्जुन**

*१. शुक्लवर्णस्य,*
वे०-१।१२२।५, वे०सा०-३।३९।२, सा०मु०-६।९।१
*२. श्वेतवर्णम्,*
वे०-६।९।१, सा०-७।५५।२
*३. श्वेतवर्णानि ज्वालान्तर्गतरूपाणि,*
सा०-१०।२१।३
*४. श्वेतवर्णस्य स्वशरीरगतत्वग्रोग्रस्य,*
सा०-१।१२२।५
*५. शुभ्रम्,*
सा०-३।४४।५

**अर्जुनी**

*१. शुभ्रवर्णे,*
सा०मु०-१।४९।३, ५।८४।२
*२. शुक्रवर्णे,*
वे०-१।४९।३
*३. शुक्लवर्णे,*
स्क०-१।४९।३, वे०-५।८४।२
*४. फल्गुन्योः,*
वे०सा०-१०।८५।१३

**आर्जुनेय**

*१. अर्जुन्याः पुत्रम्,*
वे०सा०-७।१९।२, ८।१।११, सा०-४।२६।१
*२. अर्जुनी नाम कुत्सस्य माता, तस्या अपत्यम्,*
वे०-१।११२।२३, ४।२६।१० (अर्जुनीपुत्रम्)

**अर्ण, र्णा**

*१. अरणशीलाः,*
सा०-१।१७४।२
*२. अरणकुशलाः,*
सा०मु०-५।५०।४
*३. शत्रुम्,*
वे०-१।१७४।२
*४. उदकानि दाता,*
वे०-५।५०।४

५. द्युलोके वर्तमानमर्णोऽम्भः,
सा०-३।२२।३
६. उदकम्,
वे०-३।२२।३, ५।३२।८
७. गमनशीलाः,
वे०-३।३२।५।
८. गन्तारः जलमावृत्य,
सा०मु०-५।३२।८
९. गन्तारं मेघमावृत्य,
सा०-५।३२।८
१०. नद्यः,
सा०मु०-५।४१।१४
११. आपः,
वे०-५।४१।१४

**अर्ण-साति**

१. अर्णानां गन्तॄणां युद्धे प्रवृत्तानां पुरुषाणां सातिलभिः,
सा०मु०-१०।६३।६
२. उदकस्य दातरि,
वे०-१।६३।६
३. अर्ण उदकम्, तत्संभजनवेलायाम्। मेघवधोत्तरकालम् उदकदानवेलायाम्,
स्क०-१।६३।६
४. उदकलाभे निमित्ते,
सा०-२।२०।८
५. उदकं यस्मिल्लँभ्यते सङ्ग्रामे,
वे०-२।२०।८
६. सस्यादिफलसिद्ध्यर्थमुदकलाभे निमित्ते सति,
सा०-४।२४।४
७. युद्धे,
वे०-४।२४।४

**अर्ण-चित्ररथ**

१. अर्णनामकं चित्रनामकं च राजानौ,
सा०-४।३०।१८
२. अर्णं चिरत्ररथं च,
वे०-४।३०।१८

**अर्णव**

१. उदकवन्तम्,
उ०वे०सा०-१०।६६।११, स्क०-१।५५।२, स्क०वे०-१।१९।७, वे०-३।२२।२, ५१।२, ६।६१।८, ७।६३।२, १०।१९०।१, वे०सा०-३।५३।९, ९।८६।४५, सा०-१०।११५।३,
२. उदकयुक्तम्,
सा०मु०-१।१९।७
३. उदकवन्तं मेघम्,
स्क०-१।८५।९, वे०सा०-१।१६८।६, सा०-१०।६५।३
४. अर्णसोदकेन युक्तं मेघम्,
मु०-१।८५।९

५. पर्जन्यात्मना उदकवन्तम्,
सा०-३।५१।२
६. उदकवान्। उदकप्रद इत्यर्थः,
सा०-६।६१।८, ७।६३।२ (उदकप्रदः)
७. उदकसमूहः,
स्क०-६।६१।८
८. समुद्रः,
वे०-१०।१०।१, वे०सा०मु०-१।५५।२
९. समुद्रस्यानीयम्। समुद्रवत् धनानामाश्रयमित्यर्थः,
स्क०-१।५१।१
१०. समुद्रवन्महान्,
सा०-३।२२।२

*११. समुद्रैकदेशम् अवान्तरद्वीपम्,*
उ०- १०।१०।१
*१२. अर्णसोदकेन युक्तः समुद्रः,*
सा०-१०।१९०।१
*१३. मेघमधः स्थितम्,*
वे०-१।५६।५
*१४. मेघम्,*
वे०-१।८५।९, २।२३।१८, १०।६५।३,
सा०-१०।११५।३, सा०मु०-१।५६।५,
*१५. स्थानभूतं मेघम्,*
सा०-२।२३।१८
*१६. आकरम्,*
वे०-१।५१।१
*१७. धनानामावासभूमिं एवगुण-विशिष्टम्,*
सा०-१।५१।१
*१८. अरणवत्। सर्वोपभोगसाधनान्न-साधनार्थम् गमनवत् प्रभूतमित्यर्थः,*
उ०- १०।६५।३

## अर्णस्

*१. उदकम्,*
उ०वे०सा०-१०।४९।९, स्क०वे०-१।११७।१४, ६।४७।५, ६२।६, स्क० वे०सा०- ६।३०।४, ७२।३, वे०-१।५२।२, १५८।३, १८०।१, ४।१६।७, ७।६०।४, ९।९७।२१, १०७।१२, वे०सा०-१।१६७।९, १७४।४, १८२।७, ३।३२।११, ४।१९।२, ६, ७।१८।५, ६९।७, ८७।१, ८।२०।३, २१।६, ८६।३४, वे०सा०मु०-५।४५।१०,
*२. वसतीवर्याख्येनोदकेन,*
सा०-९।१०७।१२
*३. उदकम्। अनेन पवित्रान्निर्गतः सोमरसोऽभिधीयते,*
सा०-९।९७।२१
*४. नभसि स्थितानि उदकानि,*
सा०-४।१६।७
*५. प्रौढोदकयुक्तात्,*
सा०मु०-१।११७।१४
*६. प्रभूतमुदकम्,*
सा०मु०-१।३।१२
*७. महत् उदकम्,*
वे०-१।३।१२
*८. मेघस्थमुदकम्,*
स्क०-१।३।१२, ५५।२
*९. जलानि,*
सा०-६।६२।६, सा०मु०-१।५२।२
*१०. वृष्टिजलानि,*
सा०मु०-१।६१।१२
*११. अम्भसः,*
सा०-१।१५८।३
*१२. उदकमार्गान्,*
वे०-१।६१।१२
*१३. अरणीयं रूपं तद्वन्तं पुत्रादिक-मित्यर्थः,*
सा०- १।१२२।१४, १८०।१ (अरणीयान् अभिमतदेशान्)
*१४. धनम्,*
वे०-१।१२२।१४
*१५. स्रोतः,*
वे०-२।१९।३, सा०-२।१९।३ (स्रोतो-लक्षणं प्रवाहम्)
*१६. गमनशीलं तेजः गन्ता च,*
उ०-१०।८।३

*१७. गमनस्वभावम्,*
वे०-१०।८।३
*१८. सर्वस्य प्रेरक सौरं ज्योतिः,*
सा०-६।४७।५
*१९. अर्णवमन्तरिक्षम्,*
सा०-७।६०।४

**अर्थ**

*१. यजमानस्य प्रयोजनम्,*
वे०-३।५३।५, सा०-१।१३०।५, १४४। ३, १५८।६, ३।५३।५। (अर्यते प्राप्यत इत्यर्थः प्रयोजनम्), सा०मु०-१।१०।२
*२. होतृकर्मलक्षणं प्रयोजनम्,*
उ०-१०।५१।६
*३. समानप्रयोजनवत्,*
सा०-१।१३०।५
*४. गमनशीलम्,*
स्क०-१।१०।२
*५. अरणम्। देवयजनदेशे गमनम्,*
सा०मु०-१।३८।२
*६. गमनम्,*
वे०-१।३८।२
*७. अर्थं गमनमुच्यते,*
स्क०-१।३८।२
*८. गन्तव्यम्,*
वे०-१०।२९।५ (गन्तव्यं देशम्), सा०-४।६।१०, ६।३२।५, ७।१८।९ (गन्तव्यमेव प्रणवदेशं प्रति)
*९. अर्तव्यं गन्तव्यं समुद्रं प्रति,*
सा०-२।३०।२
*१०. प्रणवं प्रति,*
वे०-२।३०।२
*११. उपगन्तारम्,*
स्क०-६।३२।५
*१२. गतिम्,*
उ०-१०।१८।४, उ०सा०-१।२७।२०
*१३. गमनस्वभावम्,*
वे०-३।११।३, सा०-३।११।३ (गमनस्वभावं तेजः)
*१४. अपेक्षितं धनम्,*
सा०मु०-१।१०५।२
*१५. धनम्,*
वे०-६।३२।५, सा०-१०।७३।५
*१६. अभिलषितम् अर्थम्,*
वे०-१।१०५।२
*१७. यथाभिप्रेतम्,*
स्क०-१।१०५।२
*१८. अपेक्षितमर्थम्,*
सा०मु०-१।११३।६
*१९. पुरुषैरर्थ्यमानं कर्मफलं स्वर्गादिकम्,*
सा०-१।१५८।६
*२०. अभिलषितम्,*
वे०-४।६।१०, १०।५९।१, ४३।१,
*२१. स्वाभिलषितमायुर्लक्षणम्,*
सा०-१०।५९।१
*२२. अर्थनीयं प्राप्तव्यम्,*
सा०-१०।१४३।१
*२३. कार्यम्,*
वे०-१।१२४।१, वे०सा०-९।१।५
*२४. सस्योत्पादनार्थं कार्यम्,*
वे०-१।१४४।३
*२५. कार्यमुद्दिश्य जगद्रक्षणात्मकम्,*
वे०-३।६१।३
*२६. जगद्रक्षणात्मकम् इदं स्वकार्यम्,*
वे०-४।१३।२

*२७. जगल्लक्षणं कार्यम्,*

सा०-४।१३।३

*२८. हव्यवहनम्,*

वे०-१०।५१।४, सा०-१०।५१।४ (हविर्वहनकार्यम्), ५१।६ (हविर्वहनाख्यमर्थम्)

*२९. हौत्रम्,*

वे०-१०।५१।६

*३०. प्रवणम्,*

वे०-१।१५८।६

*३१. साधारणं वृष्टिलक्षणमुदकम्,*

वे०-१।१३०।५

*३२. वृष्टिलक्षणम्,*

उ०-१०।७३।५

*३३. अरणीयम्,*

सा०-१।१२४।१ ८।६९।१७ (अरणीयं धनम्)

*३४. अर्तारं गन्तारं योगिनमनुगृह्णन्,*

सा०-१०।२९।५

*३५. अत्तारं संसारस्यान्तं गन्तारं योगिनमनुगृह्णन्,*

उ०-१०।२९।५

*३६. अर्यते गम्यतेऽस्मिन्नित्यर्थो मार्गः,*

सा०-३।६१।३

*३७. गन्तव्यं मरणाख्यं मार्गम्,*

सा०-१०।१८।४

*३८. अध्वानम्,*

वे०-१०।१८।४

## अर्थिन्

*१. भिक्षून्,*

वे०-१।४८।६

*२. याचकान्,*

उ०सा०-१०।२६।८, सा०मु०-१।४८।६,

*३. कार्यवन्तः,*

स्क०-१।४८।६। वे०-८।२७।१२ (कार्यार्थिनः)

*४. धनमपेक्षमाणाः पुरुषाः,*

सा०मु०-१।१०५।२

*५. धनादिकामः,*

सा०-७।१।२३

*६. धनदानार्थम्,*

वे०-७।१।२३

*७. धनानि कामयमानाः,*

सा०-८।७९।५

*८. निद्राऽर्थिनः,*

वे०-१०।१२७।५

## √अर्थि

*१. प्रार्थयेथा,*

स्क०वे०-१।८२।१, सा०-१०।१०६।१

*२. अर्थयसे एव याचयसे,*

सा०मु०-१।८२।१

## √अर्द्

*१. प्राणिनां पिपासारूपां पीडामहिंसन्,*

सा०-४।१७।२

*२. अभिभवार्थम्,*

वे०-४।१७।२

*३. नाशय,*

सा०-८।७५।१०

*४. हतवान्,*

सा०-१०।१०४।१०

*५. पीडयति,*

वे०-१०।१०४।१०

*६. अहिंसीः,*

सा०-१०।१४७।२

अर्ध

*१. पूर्वे अर्धे,*
स्क०-१।९२।१
*२. प्राचीनदिग्भागे,*
सा०-६।२७।५ (प्राग्भागे), सा०मु०-१।९२।१
*३. पूर्वस्मिन् भागे,*
वे०सा०-१।१२४।५
*४. परस्मिन्नर्धे अन्तरिक्षलक्षणे अवस्थितः आदित्यः,*
सा०-१।१६४।१२
*५. अर्धमार्गम्,*
सा०-१।१६४।१७
*६. अर्धमृद्धम्,*
सा०-१।१६४।१७
*७. अर्धस्थानभाजम्,*
सा०-१।१६४।१७
*८. समृद्धिम्,*
सा०-२।३०।५, ६।४४।१८
*९. समीपम्,*
सा०-४।३२।१
*१०. स्थानवचनम् अर्धशब्दं व्याचक्षते,*
स्क०-६।४४।१८
*११. अपरं भागम्,*
सा०-६।४७।२१, १०।२७।१८
*१२. स्थानम्,*
स्क०-६।४७।२१
*१३. हिंसकम्,*
सा०-७।१८।१६

अर्धगर्भ

*१. संवत्सरस्यार्धे गर्भं गर्भस्थानीय-मुदकं धारयमाणाः,*
सा०-१।१६४।३६
*२. ब्रह्माण्डस्यार्धे मध्येऽन्तरिक्षे गर्भ-वद्वर्तमानाः,*
सा०- १।१६४।३६
*३. उदकं गर्भिताः,*
वे०-१।१६४।३६

अर्धदेव

*१. देवानामर्धे समीपे वर्तमानम्,*
सा०-४।४२।८
*२. देवानामर्धभूतम्,*
सा०-४।४२।८
*३. उक्तलक्षणं पुत्रम्,*
सा०-४।४२।९

अर्ध्य

*१. पुनः पुनः प्रवर्धनार्हः। एकवारकरणे न संपूर्यते इत्यर्थः,*
सा०-१।१५६।१
*२. वर्धनीय,*
वे०-१।१५६।१
*३. समर्धनीयम्,*
सा०मु०-५।४४।१०
*४. पूजनीयम्,*
वे०-५।४४।१०

अर्पित

*१. तदधीनम्,*
सा०-१।१६४।१२
*२. प्रजापतिना पोषकत्वेन स्थापितः,*
सा०-६।५८।२
*३. गमितः। रश्म्यात्मनानुप्रवेशित इत्यर्थः,*
स्क०-६।५८।२
*४. निक्षिप्तम्,*
सा०-१०।१७०।२

**अर्बुद**

*१. अर्बुदनामानमसुरम्,*
स्क०-१।५१।६, वे०-१।५१।६ (अर्बुदासुरम्), सा०-२।११।२०, (अर्बुदाख्यमसुरम्)
*२. मेघस्य,*
वे०सा०-८।३२।३, सा०-८।३२।२६ १०।६७।१२। (अम्बुदस्य मेघस्य)
*३. अम्बूनि ददातीत्यर्बुदो मेघः,*
सा०-२।११।२०
*४. बहूदकत्वाद् बहुरूपत्वाच्च अर्बुदसङ्ख्यायुक्तस्येर्थः,*
उ०-१०।६७।१२
*५.अर्बुद इति विश्वरूपस्य नामान्तरम्,*
वे०-२।११।२०
*६. एतत्संज्ञकमसुरम्,*
सा०मु०-१।५१।६, सा०-८।३।१९

**अर्भ**

*१. अल्पम्,*
स्क०वे०- १।७।५, ४०।८, वे०सा०-६।५०।४, १०।९१।८, सा०- १।४६।५
*२. स्वल्पेऽपि धने निमित्तभूते सति,*
स०मु०-१।७।५
*३. अल्पाम्। युवतिमित्यर्थः,*
सा०मु०-१।५१।१३
*४. कन्याम्,*
वे०-१।५१।१३
*५. स्वल्पे युद्धे,*
सा०मु०-१।४०।८ ८१।१। (अल्पे सङ्ग्रामे)
*६. अल्पात् पुत्तिकादेः सकाशात्,*
सा०-१।१२४।६
*७. कुमारात्,*
वे०-१।१२४।६
*८. यजमानादेर्वा,*
सा०-१।१४६।५
*९. बालः,*
वे०-१।१४६।५

**अर्भक**

*१. गुणैर्न्यूना,*
सा०-१।२७।१३
*२. अल्पेभ्यः। बालेभ्यः,*
स्क०-१।२७।१३, १४४।७
*३. अल्पशरीरेभ्यः,*
स्क०-१।२७।१३
*४. बालम्,*
वे०सा०मु०-१।११४।७
*६. स्वल्पे,*
वे०-४।३२।२३। सा०- ४।३२।२३ (अल्पके), ७।३३।६। (अल्पाः)

**अर्भग**

*१. बालाय स्वयंवरलब्धभार्याय,*
सा०मु०-१।११६।१
*२. बालाय,*
वे०-१।११६।१
*३. अर्भकमित्यल्पनाम। तस्य पर्यायोऽर्भशब्दः। कै गै शब्दे। अग्न्यर्थे योऽल्पम्,*
स्क०-१।११६।१ (यास्क०-३।२०)
*४. अल्पाया भार्याया गन्ता सोऽर्भगः। तस्यार्भगस्य विमदस्य ऋषेरर्थाय,*
स्क०-१।११६।१

**अर्मक**

*१. महति,*
वे०-१।१३३।३

२. *कुत्सिते शवैः अरणीये,*
सा०-१।१३३।३
३. *कुत्सिते गतासुभिः अरणीये,*
सा०-१।१३३।३

**अर्य-र्या (१)**

१. *स्वामी,*
वे०-४।२४।८, ६।४७।९, वे०सा०-७।२१।५, सा०-४।१।७, ६।५१।२, ७।३१।५, सा०मु०- १।८१।६
२. *सर्वेषां स्वामी,*
सा०मु०-१।८१।९
३. *स्वामी स्तुतीनां हविषां वा,*
सा०-७।१००।५
४. *स्वामिरूप इन्द्रः,*
स्क०-१।३३।३ (ईश्वरः इन्द्रः), सा०-१।३३।३, ४।२४।८, ८।६३।७ (इन्द्रः), १०।२७।१९ (स्वामीन्द्रः), मु०-१।३३।३, (स्वामीन्द्रः)
५. *स्वामी बृहस्पतिः,*
सा०-२।२३।१३
६. *स्वामी मरुद्गणः,*
वे०-१०।२७।१९
७. *ईश्वरः,*
स्क०- १।८१।६, ६।४७।९, स्क०वे०-१।१२१।१५, ६।५१।२, वे०- १।३३।३, ८।६३।७
८. *धनपतिः,*
सा०-६।४७।९ (धनस्य स्वामी), सा०मु०-१।१२१।१५,
९. *पालयिता,*
सा०-१।८१।६
१०. *उदारः,*
वे०-१।८१।६
११. *अरणीयो विश्वेषां देवानां संघः,*
सा०-१।१२२।१४
१२. *पूज्यस्य,*
सा०मु०-५।३३।९
१३. *सर्वस्यापि इनः,*
वे०-४।१।७
१४. *शत्रून्,*
वे०-२।२३।१३, वे०सा०-१०।८९।३
१५. *अभिगन्तव्यः,*
सा०-८।१९।३६
१६. *स्तोमानाम् ईश्वरः। महेश्वरः,*
वे०-७।१००।५
१७. *सर्वस्येश्वरः प्रजापतिः,*
उ०-१०।२७।१९

**अर्यपत्नी**

१. *अर्यः सूर्यः पतिर्यासां ता अर्यपत्न्यः,*
सा०-७।६।५
२. *अर्यस्य सर्वस्य जगतः स्वामिन इन्द्रस्य पालयितव्या इमा वृष्टिलक्षणा अपः,*
उ०-१०।४३।८
३. *सर्वस्य जगतः स्वामिन इन्द्रस्य पालयितव्या,*
सा०-१०।४३।८
४. *दासपत्नी,*
वे०-१०।४३।८

**अर्य-र्या (२)**

१. *अरणीया पूजनीया,*
सा०-१।१२३।१
२. *महती,*
वे०-१।१२३।१

**अर्यमन्**

*१. अरीनमन्देहादीनसुरान् यच्छति नियच्छतीति सूर्यः,*

सा०मु०-१।८९।३

*२. ऋच्छति सर्वदा गच्छतीत्यर्यमा सूर्यः,*

सा०-३।५४।१८

*३. आदित्यः,*

सा०मु०-५।५४।८

*४. अरीणां नियन्ता,*

सा०-१०।१४१।२

*५. अर्याणां निर्माता,*

सा०-१०।१४१।२

*६. दातारम्,*

सा०-१।१७४।६, ७।६०।१

*७. दातृत्वम्,*

सा०-२।१।४

*८. प्रेरयितारम्,*

वे०-१।१७४।६

*९. उदारम्,*

वे०-७।३६।४

*१०. अश्वान् अधिष्ठाय गच्छन्ति उदाराः,*

वे०-५।५४।८

*११. सर्वदा गच्छन् एतन्नामकास्त्रयो देवाः,*

सा०-८।२५।१३

*१२. एतन्नामकेन देवेन,*

सा०-९।१०८।१४

**अर्वत्**

*१. अश्वः,*

स्क०वे०-१।७३।९, स्क०वे०सा०-१।४३।६, ५।३९।५, ६।४५।२, १२, स्क०वे०सा०मु०-१।८।२, २७।९, वे०-२।२।१०, ३३।१, ४।३१।४, ३७।६, ५।६।१, ८।२।३६, ९।१०।१, १०।६४।६, ९६।७, वे०सा०-१।१६२।८, १२।१४, ७।३५।१२, ९०।६, ८।१९।६, ४०।२, वे०सा०मु०-१।९१।२०, ५।३६।२, ४७।११, ९।६।२, सा०-९।११।६, ६१।१६,

*२. शत्रुसंबन्धिनः अश्वान्,*

सा०मु०-१।७३।९

*३. अरणकुशलेनाश्वेन,*

सा०-२।२।१०, १०।९६।७ (अरण-कुशलैः)

*४. अरणवताश्वेन,*

सा०-४।३७।६, ५।६।१

*५. अश्वलाभाय,*

सा०मु०-५।८६।५

*६. अश्वैर्वाहनभूतैः,*

सा०- ८।२।३६

*७. इन्द्रादीनां वाहनभूता हर्यादयः,*

सा०-१०।६४।६

*८. भ्रातृव्यम्,*

वे०-१।१६३।९, वे०सा०-१०।४०।५

*९. भ्रातृव्याय मर्ताय,*

वे०-५।८६।५

*१०. गन्तृभिः,*

वे०सा०-१०।९६।८

*११. उपगन्तॄन्,*

सा०-४।३१।४

*१२. अभिगच्छते,*

वे०-६।३६।२

*१३. शत्रूणामभिगन्त्रे,*
सा०-६।३६।२
*१४. गन्त्रे च शत्रून प्रति,*
स्क०-६।३६।२
*१५. स्वर्गीतिं गन्त्रे मह्यं स्तोत्रे,*
उ०-१०।४५।५
*१६. अरणवन्तो यज्ञं प्रति गमनवन्तः,*
उ०-१०।६४।६
*१७. अरः अर्तारः सर्वत्र गन्तारः,*
उ०-१०।६४।६

**अर्वन्**

*१. अभिगन्ता,*
वे०-१०।१३५।५ सा०-७।५८।४, १०।९९।४ (मेघेष्वभिगन्ता), ३२।५ (अभिगन्ता मित्रो वरुणो वा)
*२. गमनशीलः,*
वे०-१।१४९।३,९।८७।७,१०।२७ सा०-४।७।११ (गमनशीलोऽग्निः) ७।४४।४
*३. गमनस्वभावः,*
वे०-४।७।११
*४. गन्ता,*
वे०-४।३६।६, ७।४४।४ वे०सा०-६।१२।६, सा०-६।१२।४
*५. सततगामा,*
सा०-१०।२७।१४
*६. अर्ता सर्वत्रगामी वेत्यर्थः.... द्युलोक-गामी वेत्यर्थः,*
उ०-१०।२७।१४
*७. अश्वः,*
स्क०वे०सा०मु०-१।१०४।१, वे०-१।१६३।१, ८, ६।१२।४, २८।४, ७।२२।१, ५८।४, वे०सा०-१।१६३।४, ४।११।४,
*८. वेगवांस्त्वदीयोऽश्वः,*
सा०-७।३७।६
*९. गमनशीलाश्वः,*
सा०-१।१६३।८
*१०. बलवानश्वः,*
सा०-३।४९।३
*११. युद्धार्थमागतोऽश्वः,*
सा०-६।२८।४
*१२. अरणकुशलः,*
सा०-१।१४९, ३, ४।३६।६, ९।८७।७
*१३. अरणकुशलाश्वः,*
सा०-१।१६३।१
*१४. अप्रत्यृतः,*
वे०-१०।९९।४

**अर्वश**

*१. अश्ववान्,*
वे०सा०-१०।९२।६
*२. सोमवान्,*
सा०-१०।९२।६

**अर्वाच्, ञ्च**

*१. अस्मदभिमुखम्,*
उ०-१०।७७।४। उ०सा०-१०।२९।३, स्क०-६।६०।३, स्क०सा०-६।३७।१, ६२।११, ६३।१, स्क०सा०मु०-१।१०८।४, ११८।२, वे०-२।३९।३, वे०सा०-३।४३,६,७।२७।३, वे०सा० मु०-१।४७।१०, सा०-२।३९।५, ३।५८।२, ४।४।८, ३२।१५, ७।३९।३, ६४।२, ६७।३, ८।६१।१०, सा०मु०-५।४३।५
*२. स्तोत्रैः शस्त्रैश्च अर्वाक् आत्माभि-मुखम्,*
स्क०-१।४७।१०, सा०-१०।८९।५, (आत्माभिमुखतया),

*३. मदभिमुख सन्,*
सा०-६।१८।११
*४. अस्मान् प्रति,*
स्क०-६।६०।३
*५. अस्मदभिमुखी,*
सा०-७।१८।३
*६. अभिमुखम्,*
वे०-१।१०८।४, ११८।२, ५।४३।५, ६२।४, ६।१८।११, ३७।१, ६२।११, ६३।१, ७।६४।२, ६७।३, ८।६१।१, १०।१५।४, २९।३, वे०सा०-३।३२।१३, ५८।२, १०।७७।४, सा०-२।३९।३, ८।८।२३, सा०मु०-५।४३।८
*७. त्वदभिमुखम्,*
सा०- ४।४।८
*८. इतोमुखम्,*
वे०- ४।३२।१५, ५।४३।८, ६।६०।३
*९. अवाङ्मुखाः,*
सा०मु०- ५।४५।१०
*१०. अर्वाचीनान् अधोमुखान्,*
वे०- ७।३९।३
*११. अर्वाचीनाः कृताः। भूतसृष्टेः पश्चाज्जाताः,*
सा०-१०।१२९।६
*१२. अर्वाचीनमधोभाविन्यस्मिँल्लोके ब्राह्मणैः सह,*
सा०-१०।७१।९
*१३. अस्मिन् लोके ब्राह्मणैः सह,*
वे०-१०।७१।९
*१४. अर्वाग्ज्ञानं देवताज्ञानं वा,*
उ०-१०।७१।९

**अर्वाची**

*१. अस्मदभिमुखा,*
सा०-२।३४।१५
*२. अस्मदभिमुखी,*
स्क०सा०मु०-१।१०७।१, वे०-२।३४।१५
*३. अभिमुखी,*
वे०-४।५७।६
*४. अर्वागञ्चना,*
सा०-४।५७।६
*५. अस्मद्विषया,*
वे०-१।१०७।१

**अर्वाचीन**

*१. अस्मदभिमुखः,*
वे०सा०-४।३।२, वे०सा०मु०-१।८४।३, सा०-३।३७।२, ४।२०।२, २४।१, ६।२५।३, ७।४१।६
*२. अभिमुखः,*
वे०- ३।३७।२, ७।४१।६, १०।११६।२ वे०सा०- ९।९७।२८, १०।६।६, सा०- ४।३२।१४, ६।२५।३
*३. अभिमुखाञ्चनः,*
सा०-१०।११६।२
*४. इतोमुखः,*
वे०-४।२०।२, २४।१, ३२।१४
*५. अस्मद्यज्ञगमनाभिमुखम्,*
स्क०-१।८४।३
*६. अर्वागञ्चनाः अस्मदभिमुखाः,*
उ०-१०।६।६

**अर्वावत्**

*१. समीपे च,*
वे०-८।३३।१०
*२. समीपेऽपि वृषा सेचकः,*
सा०-८।३३।१०
*३. समीपस्थदेशादपि आभिमुख्येन,*
सा०-८।८२।१
*४. समीपस्थान्,*
वे०-९।३९।५

५. *अन्तिकात्,*
वे०-८।८२।१, ९।६५।२२
६. *अन्तिके देश इन्द्रार्थम्,*
सा०-९।६५।२२
७. *अन्तिकस्थांश्च देवान्,*
सा०-९।३९।५
८. *अरणवति गन्तुं शक्ये प्रदेशे अन्तिके स्थः,*
सा०-५।७३।१
९. *गन्तुं शक्ये प्रदेशे अन्तिके स्थः,*
मु०-५।७३।१

**अर्शसान**

१. *शत्रूणां हिंसित्रे,*
वे०-१०।९९।७। (हिंसित्रे), सा०-१०।९९।७
२. *बाधमानः,*
वे०-१।१३०।८, वे०सा०-८।१२।९
३. *हिंसारुचिं हतावशिष्टं सर्वम्,*
सा०-१।१३०।८

**√अर्ष्**

१. *गच्छति,*
वे०-८।९४।७, ९।४२।५, ६३।२०, वे०सा०- ९।२।४, ३।९, ५।२, ३२।४, ३८।१, ४४।१, ५७।२, ६७।४, १५, ७७।४, ८६।११, १२, सा०-९।१२।८, ६२।२४, ६७।३,
२. *गच्छन्ति, रसवत्यो भवन्ति,*
सा०-१।१२५।५
३. *गच्छन्ति, प्राप्नुवन्ति,*
सा०- २।५५।४
४. *अभिगच्छति,*
वे०सा०- ९।१।४ १०७।५
५. *प्रति गच्छन्ति,*
वे०- ४।१८।६

६. *गमयति,*
वे०-१।१०५।१२, ९।५६।२, सा०- ९।५६।२ (गमयति। अस्मभ्यं प्रयच्छतीत्यर्थः)
७. *क्षरति,*
सा०-९।६३।२०
८. *पवस्व,*
वे०-९।१०९।३, वे०सा०-९।६३।२९, सा०-९।१०९।३। (पवस्व, क्षर)
९. *आलस्यराहित्येन सर्वदा प्रेरयन्ति। अशोष्याः सत्यः प्रवहन्तीत्यर्थः,*
सा०-१।१०५।१२। मु०-१।१०५।१२ (आलस्यराहित्येन सर्वदा प्रेरयन्ति)
१०. *प्रेरयन्ति,*
वे०-१।१२५।५
११. *निपतन्ति,*
वे०-२।२५।४
१२. *अधः पतन्ति,*
सा०-४।५८।५, ६

**√अर्ह्**

१. *पूजयन्ति,*
सा०-८।२०।१८
२. *योग्यं भवति। प्रकाशनादिद्वारा पूजयति,*
सा०-१०।१५८।२
३. *समर्थाः भवामः,*
सा०-४।५५।७

**अर्हत्**

१. *तादर्थ्य एषा चतुर्थी... स्तोमार्हस्य,*
स्क०-१।९४।१
२. *स्तोमार्हाय,*
वे०-१।९४।१
३. *पूज्याय,*
सा०मु०-१।९४।१

**अर्हरिष्वणि**

*१. गच्छन्तो हरन्तीति अर्हरयः शत्रवः। तेषां व्यथोत्पादनेन स्वनयिता शब्दयिता इन्द्रः,*
सा०मु०-१।५६।४
*२. हरणशीलस्वनः,*
वे०-१।५६।४

**√अल्**

*१. गच्छति,*
वे०सा०-८।४८।८, सा०-८।१।७
*२. परितो गच्छति,*
वे०-८।१।७

**अलक**

*१. अलीकं व्यर्थमेव,*
उ०वे०-१०।७१।६ (अलीकम्), सा०-१०।७१।६
*२. व्यर्थम्,*
वे०सा०-१०।१०८।७
*३. कुत्सितम्,*
उ०-१०।७१।६
*४. अपर्याप्तम्,*
उ०-१०।७१।६

**अलला, भवन्ती**

*१. अललाशब्दं कुर्वत्यः,*
वे०-४।१८।६
*२. अललेत्येवं शब्दं कुर्वत्यः,*
सा०-४।१८।६

**अलातृण**

*१. इकारस्य स्थाने लकारः। अनातृणासः। आतर्दनरहिताः,*
सा०-१।१६६।७
*२. अलं पर्याप्तम् आर्तदनाः शत्रूणाम्,*
सा०-१।१६६।७
*३. अलम् अत्यर्थं दातारः फलानाम्,*
सा०-१।१६६।७
*४. अलमातर्दनाः,*
वे०-१।१६६।७, ३।३०।१०
*५. बहूदकतया अलमत्यर्थमातृद्यते हिंस्यत इत्यलातृणः,*
सा०-३।३०।१०

**अलाय्य**

*१. अभिगच्छतः,*
वे०-९।६७।३०
*२. अभिगमनशीलस्य शत्रोः,*
सा०-९।६७।३०

**अलिन**

*१. शत्रुशरीरेषु एवं लीनाः शरीरं निर्भिद्य शीघ्रं गच्छन्तः,*
वे०-७।१८।७
*२. तपोभिरप्रवृद्धा इत्यर्थः,*
सा०-७।१८।७

**√अव्**

*१. रक्षति,*
उ०वे०-१०।३५।११, स्क०वे०सा०मु०-१।७।४, ३४।५, स्क०सा०मु०- १।११२।२, वे०- २।३१।१, ५।३३।७, ७।३८।८, ४७।२, ८३।१, ८।७०।६, ७५।१४, ९।९।६, ६१।२२, १०।१५।१, वे०सा०-१।१३१।५, २।१२।१४, ३।८।८, ३२।१२, ४।३१।१०, ६।४६।११, ५०।१४, ७।३६।७, ६७।४, १०४।१२, ८।२।३५, ३।१, ३०।३, ३६।२, १०।५०।५, ९७।१४, १०२।१, वे०सा०मु०- १।७९।७, ५।४०।७, ४१।११, ६३।१, ८३।४, ८७।६, सा०- ४।५२।६, ६।१९।७, १५।१५, ८।८।२०, २२।१०

२. *रक्षामकरोत्,*
सा०-१०।१२०।७
३. *अभिरक्षतम्,*
वे०-८।८।२०
४. *पालय,*
स्क०-१।७९।७, ६।४६।११, ५०।१४, सा०- ७।३८।८, ४७।२, सा०मु०-५।३३।७,
५. *गच्छति,*
वे०- ६।९।७, १०।१२०।७, सा०-८।७५।१४, १०।३५।११
६. *आगच्छति,*
वे०-४।५२।६, सा०-७।८३।१
७. *अभिगच्छति,*
सा०-५।८३।४
८. *प्रति गच्छति,*
वे०-१०।३५।११

**अव**

१. *तृप्तिनिमित्तेन भोज्या भक्ष्याणि पुरोडाशादीनि,*
सा०-१।१२८।५
२. *परिरक्षणार्थम्,*
वे०-१।१२८।५

**अवत्**

१. *मरणादिभ्यः प्राणिनां सर्वदा रक्षितः,*
स्क०-१।२४।३
२. *रक्षितः,*
वे०-१।२४।३
३. *रक्षन्,*
वे०- ७।४६।२, वे०सा०-८।७३।७
४. *पालयन्,*
सा०-७।४६।२
५. *रक्षकः,*
सा०मु०-१।२४।३

**अवन्ती**

१. *प्रीणयन्त्यः,*
सा०-१।१५२।६
२. *रक्षन्त्यः,*
वे०-१।१५२।६, ७।४६।२
३. *तर्पयन्त्यौ,*
सा०-१।१८५।४
४. *त्वां स्तोत्रैस्तर्पयन्तीः,*
सा०-७।४६।२
५. *रक्षन्त्यौ,*
वे०- १।१८५।४

**अवनि**

१. *पृथिवी,*
स्क०- १।४।१०, वे०- १।१८१।३
२. *नदीः,*
स्क०-६।६१।३, वे०सा०मु०-५।८५।६,
३. *भूमिः,*
सा०-१।१८१।३, १९०।७, ६।६१।३ (असुरैरपहता भूमीः), सा०मु०- ५।५४।२
४. *क्षेत्राणि,*
वे०-६।६१।३
५. *रक्षकः,*
वे०-८।३२।१३, वे०सा०मु०-१।४।१०,
६. *स्वामी,*
सा०- १।४।१०
७. *मार्गाः,*
वे०-१।१९०।७
८. *अवन्तीत्यवनय आपः,*
सा०-१०।९९।४
९. *अपः,*
वे०-१०।९९।४

*१०. पालकः,*
सा०-८।३२।१३
*११. रात्रीः,*
सा०-७।८७।१

**अवस्**

*१. रक्षणम्,*
उ०सा०- १०।२२।७, स्क०वे०- ६।६५।३, वे०-२।३४।१४, ३।२२।३, २५।१, ५१।६, ५९।६ ६।१४।१, ३, ६१।२, ८।९।१, १०।६।१, १४९।५, वे०सा०-१।१८६।१०, १८७।६, ३।२।१३, १३।२, ४१।७, ८, ५।७६।२, ६।२०।१०, ७।१।२, २०।१, २१।८, ९, ९४।७, ९।१३, ४७।५, ७५।१६, ९७।८, ९।६१।२४, १०८।१४, १०।१५।४, १८५।१ वे०सा०मु०-१।१७।६, ५।१७।१, ६५।५, सा०- १।१५८।३, ३।१।१५, २२।७, ६।६।१, सा०मु०-१।१७।१, ८५।११, ८६।६, ५।४६।६, ७४।६, ७६।३
*२. मनुष्याणां रक्षणैर्हेतुभिः स्तोतृभिः,*
वे०-४।२२।७
*३. रक्षाम्,*
सा०-३।१।१५, १०।६।१
*४. रक्षणार्थम्,*
वे०-१।१७।२, ८६।६, ६।५२।५, ७।८५।४, १०।२२।७, वे०सा०- ८।८।९, सा०- ६।१४।१, ६१।२, ९।९।१, ३१।२, १४९।५
*५. रक्षितुम्,*
वे०सा०-९।५८।२
*६. अवितुमनुष्ठातारं रक्षितुम्,*
सा०मु०-१।१७।२
*७. पालनार्थम्,*
स्कं०-१।८६।६
*८. पालनम्,*
स्क०वे०-१।१७।१, वे०- १।१५८।३, ५।७४।६, वे०सा०-८।२६।२, सा०-१०।६।१
*९. पालयितुम्,*
स्क०-१।८५।११
*१०. पाल्यमाना,*
स्क०-१।१७।६।
*११. अन्नस्य,*
वे०-२।४।८, वे०सा०मु०-६।६।१, सा०-३।५९।६, ६।६५।३, ७।९४।७
*१२. अन्नलक्षणं हविः,*
सा०-३।५१।६, ४।१।२२, (अन्नं हविः), ६।५२।५, (हविषा)
*१३. तर्पणाय,*
सा०-४।२५।१, ७।८५।४, (तर्पणार्थम्), सा०मु०-५।२२।३,
*१४. अभिमततर्पणस्य,*
सा०-२।४।८
*१५. अवितुं संगन्तुम्,*
सा०- २।३४।१४
*१६. रक्षकेण,*
वे०सा०-३।३२।१३

**अवस्यत्**

*१. अवः पालनम्, तत् कामयमानाय,*
स्क०-१।११६।२३
*२. रक्षणमिच्छते,*
वे०-१।११६।२३
*३. अवनं रक्षणमात्मनः इच्छते,*
सा०मु०-१।११६।२३

**अवस्यु, स्यू**

*१. रक्षाकामाः,*
वे०सा०-९।८६।२४, सा०- २।११।१३, ८।६३।१०,

२. रक्षणेच्छुः,
वे०-१।११४।११, १३१।३, २।११।१३, वे०सा०मु०- १।२५।१९, सा०- २।२१। ५, सा०मु०- १।१०१।१
३. रक्षणकामाः,
सा०- ९।१३।२, ९४।४
४. रक्षणमिच्छन्,
वे०- ८।६३।१०, वे०सा०- ७।३२।१७, ९।४३।२, सा०-८।१३।९, २१।१,
५. अवनं रक्षणं तद्धेतून् देवनिच्छन्तः,
सा०मु०-१।१४।५
६. अवनमात्मनः तर्पणः वा सोमेन अग्नेस्तत्कामाः,
स्क०-१।१४।५
७. पालनमिच्छन्तः,
वे०-१।१४।५
८. आत्मपालनकामः,
स्क०- १।२५।१९
९. पालनकामाः,
स्क०- १।१०१।१, ११४।११
१०. पालनेच्छवः,
वे०-१।१०१।१
११. अवः अन्नं इच्छन्तो वयम्,
सा०मु०-१।११४।११
१२. अन्नेच्छवः,
वे०-२।११।१२
१३. रक्षणं इच्छन्तो वयम्,
सा०-१।११४।११, २।२१।५
१४. त्वत्तो रक्षणमिच्छन्तः,
सा०-२।११।१२, ३।४२।९
१५. आत्मनो रक्षणमिच्छन्,
सा०-३।३३।५
१६. कुत्सं रक्षितुमिच्छन्,
वे०-४।१६।११, सा०-४।१६।११ (कुत्सस्य रक्षणमिच्छन्)
१७. इन्द्राय तृप्तिमिच्छन्तः,
सा०-१।१३१।३
१८. आत्मने तृप्तिमिच्छन्तः,
सा०-१।१३१।३
१९. जिगमिषवः,
वे०- २।१९।८
२०. अवो गमनमिच्छन्तः पुमांसः,
सा०- २।१९।८
२१. अवस्युः एतन्नामकः,
सा०मु०-५।३१।१०
२२. ऋषिः कान्तदर्शनः,
वे०-५।३१।१०
२३. रक्षयित्रीम्,
सा०मु०-५।४६।१
२४. रक्षिकाम्,
वे०-५।४६।१

## अवस

१. अन्नम्,
वे०-१।९३।४, सा०मु०-१।९३।४ (गोरूपमन्नम्), ११९।६
२. अवितारं गन्तारम्। नंष्टारमित्यर्थः,
स्क०-१।९३।४
३. रक्षकं पयः,
सा०मु०-१।११९।६
४. पयोलक्षणं पथ्यदनम्,
स्क०-१।११९।६ (अवसं पथ्यदनमुच्यते, यास्क०-१।१७)
५. केवलं स्वात्मन एव तर्पकम्,
सा०-६।६१।१

## अवितवे

गन्तुम्,
वे०सा०-७।३३।१

**अवितृ**

*१. रक्षकः,*
वे०-१।३६।२, २।१२।६, ४।१६।१८, ३१।३, ८।७१।१५, १०।७।७, ३९।३, वे० सा०- १०।२४।३, सा०-३।६२।९, ६।३४।५, ८।८०।३, सा०मु०- १।४४।१०,
*२. दृष्टभयेभ्यो रक्षकः,*
उ०-७।९६।२ (दृष्टभयेभ्योरक्षिता), सा०-१०।७।७
*३. रक्षिता,*
स्क०वे०-१।४४।१०, स्क०वे०सा०-६।३३।४, ४५।५, ४८।२ स्क० सा०-६।४४।१५, वे०-१।१८।१, ३।१९।५, ६।३४।५, सा०-२।१२।६, ४।१६।१८, ३१।३, सा०मु०-१।३६।२,
*५. रक्षित्री,*
सा०- ६।६१।४, ७।९६।२
*६. पालयिता,*
स्क०- १।३६।२, ६।३४।५, ६१।४ (पालयित्री), सा०-३।१९।५, ९।६७।१०
*७. अन्नानां धनानां च दातारौ,*
सा०-१।१८१।१
*८. तर्पयिता,*
स्क०-६।४७।११ सा०-१।१८७।२, ६।४७।११ (कामैस्तर्पयितारम्)
*९. उपरतिरहिताम्,*
सा०-७।३६।८
*१०. अश्वैः वाहनभूतैः,*
सा०-८।२।३६

**अवित्री**

*१. रक्षिके,*
वे०-२।३२।१
*२. पालयित्र्यौ,*
सा०-२।३२।१

**अविष्ठ**

*अतिशयेन रक्षिता,*
वे०सा०-७।२८।५

**अविष्यत्**

*१. पूज्यतमाय,*
वे०-१०।११५।६
*२. पालकाय,*
सा०-१०।११५।६

**अविष्या**

*१. निर्गमनानि,*
वे०-२।३८।३
*२. गमनेच्छाम्,*
सा०-२।३८।३

**अविष्यु**

*१. पालनकामाः,*
वे०सा०-८।४५।२३
*२. रक्षितुमिच्छन्तः,*
सा०-८।६७।९
*३. अन्नेच्छवे,*
सा०-१।१८९।५

**ऊति**

*१. रक्षणम्,*
वे०-१।४।१, ८।९, २।११।१३, ४। १६।९, ३१।१०, ५४।७, ६।५।७, २५।१, ७।२६।५, ५९।४, ८।५।२४, ८।१, ९।५२।५, १०।१५।४, ४९।३, वे०सा०- २।५।१, ८।६, ३।२५।५, ४।१।५, ३२।२, ५।५।३, ९।६, ६।९।७, ७।१९।११, ८।५।४, २१।७, ४७।१, ९।५१।४, ९७।३८, वे०सा० मु०- १।६३।६, ६।८।६, सा०-१। १२९।८, २।१२।९, १४।२, १०।८९।१८ सा०मु०-१।६३।६, मु०-४।३०।१,

*२. रक्षणायाद्यम्,*
वे०-१०।४३।१
*३. रक्षणार्थम्,*
वे०- ५।३०।१
*४. परिरक्षणैः,*
वे०- १।१२९।८
*५. रक्षितुम्,*
वे०- ३।१४।२
*६. शत्रुकृतोपद्रवपरिहाररूपै रक्षणैः,*
सा०-४।१६।९
*७. रक्षाभिः,*
सा०- ४।३१।१०, ५।३०।१, ६।२४।३, २५।१, ७।१९।३, २५।३, २६।५, ५९।४, ८।५।२४, ८।१, १०।१५।४, सा०मु०- १।७।४, ५।५४।७, ६।२।४, ५।७
*८. रक्षार्थम्,*
सा०-८।५२।५, सा०मु०-१।४।१
*९. रक्षारूपाः,*
सा०मु०-१।८।९
*१०. विघ्नपरिहारेण कर्मपरिपालनादि-रूपाः रक्षाः,*
सा०-३।१४।६
*११. रक्षाभिः प्रशस्तिभिः,*
मु०-५।९।६
*१२. पालनाय,*
स्क०-१।४।१, ८।९, ६३।६, स्क०वे०-१।७।४, वे०-६।२।४, ७।१९।३
*१३. शस्त्रास्त्रप्रज्ञाबलविषयैः सर्वतः पालनैः,*
उ०-१०।४९।३
*१४. वधादिरूपैः,*
सा०-१०।४९।३
*१५. तर्पणाय,*
स्क०-१।४।१
*१६. प्रीतये प्रीतिजननार्थमित्यर्थः,*
उ०-१०।४३।१
*१७. मरुद्भिः,*
वे०-३।३६।१, ८।४६।७। सा०-३।३६।१ (अवन्ति रक्षन्ति सर्वमित्यूतयो मरुतः)
*१८. गन्त्र्यः,*
सा०-८।४६।७
*१९. प्रणयेन,*
सा०-२।११।१३

ऊम

*१. रक्षकाः,*
वे०-३।६।८, वे०सा०मु०-५।५२।१२ सा०-४।१९।१,७।३९।४ सा०मु०-५।५१।१(सर्वैरपि रक्षकैः)
*२. अवितारः,*
उ०वे०सा०-१०।७७।८, वे०-४।१९।१, ७।३९।४, सा०-१।१६६।३,
*३. अवितारस्तर्पयितारः,*
उ०सा०-१०।३१।३
*४. आपोऽवित्र्यः,*
वे०- १०।३१।३
*५. रक्षितारः,*
वे०-१।१६६।३, १०।३२।५ सा०-१०।३२।५ (रक्षितृभ्यो देवेभ्यः)
*६. रक्षणैः,*
वे०-१।१६९।७
*७. स्वरक्षणैरुदकनिगमनसाधनैर्वा,*
सा०-१।१६९।७
*८. ऊमसंज्ञकाः पितरः,*
वे०-५।५१।१ (पितृभिः), १०।६।७ (ऊमाः नाम पितरः), सा०-३।६।८
*९. ऋतवः,*
वे०-१०।१२०।१ (जैमिनीय ब्राह्मण, २।१४४)

*१०. अवन्ति रक्षन्तीत्यूमाः प्राणिनः,*
सा०-१०।१२०।१,३

### ओम

*१. रक्षकाः,*
सा०मु०-१।३।७
*२. अवितारः रक्षितारः,*
स्क०-१।३।७। वे०-१।३।७ (अवितारः)
*३. तर्पयितारः,*
स्क०-१।३।७

### ओम्या-वत्

*१. सुखयुक्तं सुखेन स्प्रष्टुं शक्यम् अकुरुतम्,*
सा०मु०-१।११२।७
*२. पालनवन्तम्,*
स्क०वे०-१।११२।७

### ओम्यावती

*१. अस्मत्पालनफलमित्यर्थः,*
स्क०-१।११२।२०
*२. पालनवतीम्,*
वे०-१।११२।२०
*३. ओम्या इति सुखनाम। तद्युक्ताम्,*
सा०मु०-१।११२।२०

### ओमन्

*१. सुखम्,*
वे०-१।३४।६, सा०मु०- १।३४।६, (सुखविशेषम्)
*२. पालनम्,*
स्क०-१।११८।७, ६।५०।७ (अवनं पालनम्)
*३. सर्वोपस्करपालनसमर्थम्,*
स्क०-१।३४।६
*४. अवति रक्षतीत्योमारक्षकमन्नम्,*
सा०-६।५०।७
*५. 'अन्नं वा ओमा' इति ब्राह्मणम्,*
वे०-६।५०।७
*६. पितृभिः,*
वे०-५।४३।१३
*७. सुखकरम्,*
सा०मु०- १।११८।७
*८. रक्षणम्,*
वे०- ७।६८।५, सा०- ७।६८।५ (रक्षणं सुखम्), सा०मु०-५।४३।१३
*९. रक्षणार्थम्,*
वे०-७।६९।४
*१०. अवनेन रक्षणेन निमित्तेन,*
सा०-७।६९।४

### ओमन-वत्

*अवनवन्तम्,*
वे०सा०-१०।३९।९

### ओमात्रा

*१. रक्षणम्,*
वे०-१०।५०।५
*२. रक्षणम्। अम गत्यादिषु। औणादिक आत्रन्प्रत्ययः। छान्दस उमादेशः,*
सा०-१०।५०।५

### अवंश

*१. वंशरहितेनान्तरिक्षेण,*
वे०-७।५८।१
*२. उत्पत्तिरहिते,*
सा०-४।५६।३
*३. अनाधारे अन्तरिक्षे,*
सा०-४।५६।३, ७।५८।१ (अन्तरिक्षात्)
*४. आकाशे,*
सा०-२।१५।२

### अवचाकशत्

*१. अवेक्षमाणः,*
वे०-९।३२।४

२. पश्यन्,
सा०-९।३२।४
३. अवपश्यन्,
वे०-१०।१३६।४
४. अभिपश्यन् स्वतेजसा दर्शयन्,
सा०-१०।१३६।४

**अव√कृश्**
नाल्पी भावयन्ति,
सा०-६।२४।७

**अवक्रक्षिन्**
१. अवकर्षणशीलम्,
वे०-८।१।२
२. अवकर्षणशीलं शत्रूणां हिंसितारम्,
सा०-८।१।२

**अव√क्रन्द्**
१. क्रन्दनं कुरु,
वे०-२।४२।३
२. शब्दं कुरु,
सा०-२।४२।३
३. अवाङ्मुखं शब्दयतु वृष्ट्यर्थम्,
सा०मु०-५।५८।६
४. शब्दं करोति। उपजातबलो युद्धार्थी गर्जति,
स्क०-५।५८।६

**अव√क्रम**
अवक्रमणम् अभिभवः,
वे०-७।३२।२७

**अव√क्षिप्**
प्रक्षिप,
सा०-२।३०।५

**अवक्षिपत्**
१. अधः प्रेरयन्,
उ०-१०।६८।४
२. वृष्ट्यर्थमवकिरन्,
सा०-१०।६८।४

**अवखाद**
१. अवखाद इति खादिः सामर्थ्याद्धिंसार्थः। न चात्र अस्मद्यज्ञे कश्चिद्धिंसिता तिष्ठति युष्माकमा-गतानां सतामित्यर्थः,
स्क०-१।४१।४
२. अवखादो गर्त उच्यते,
स्क०-१।४१।४
३. अवमन्तव्यः खादो जुगुप्सित-हविर्विशेषः,
सा०-१।४१।४

**अव√ख्या**
१. अवाकृत्य न्यक्कृतम्,
उ०सा०-१०।२७।३
२. अव हि पश्यत,
वे०-८।४६।११
३. पश्यताधस्तात्स्थितानस्मान्,
सा०-८।४७।११
४. अभिपश्यति,
सा०-१।१६१।४

**ओगण**
संघीभूताः,
वे०सा०-१०।८९।१५

**अव√गम्**
१. प्रति गच्छति,
उ०वे०-१०।४०।३, वे०सा०- १०।८६। १०
२. भूमिं प्रति गताः,
स्क०-१।३२।२
३. प्राप्नुतम्,
सा०-८।३५।४, १०।४०।३

*४. प्राप्ताः,*
सा०मु०-१।३२।२

**अवगत्य**

*१. उपगम्य,*
स्क०-६।७५।५
*२. उपेत्य,*
वे०-६।७५।५
*३. प्राप्य,*
सा०-६।७५।५

**अव√गा**

*गच्छसि ...अवाङ्मुखम्,*
सा०- १।१७४।४

**अव√गृ**

*१. अत्यर्थं पुनः पुनर्वा अवगिर पिबेत्यर्थः,*
स्क०-१।२८।१
*२. पिब,*
वे०-१।२८।१
*३. स्वकीयत्वेनावगत्यैव भक्षय,*
सा०मु०-१।२८।१

**अव√ग्लै**

*ग्लानिं ... कुर्वन्ति,*
सा०-१।१६४।१०

**अव√चक्ष्**

*१. अवपश्यति,*
वे०-८।६२।६, १०।३०।२,
वे०सा०-९।७१।९
*२. अधस्तात् पश्यति,*
वे०-९।९७।३३, सा०-१०।३०।२
(अधस्तात् अन्तरिक्षे ... पश्यति)
*३. अवस्तात् पश्य,*
सा०-९।९७।३३
*४. पश्यति,*
उ०-१०।३०।२

*५. अवदर्शनाय,*
सा०-४।५८।५
*६. अवख्यातव्याः,*
वे०-४।५८।५

**अवचिन्वती**

*१. चिन्वानेव,*
वे०-३।६१।४
*२. अवचयमपक्षयं प्रापयन्ती,*
सा०-३।६१।४

**अव√चृत**

*१. अधो मुञ्च,*
स्क०-१।२५।२१
*२. विचर्तनम्,*
वे०-१।२५।२१
*३. अवकृष्य नाशय,*
सा०मु०-१।२५।२१

**अवत**

*१. कूपः,*
उ०वे०सा०- १०।२५।४, स्क०-१।११६।९, स्क०वे०सा०मु०- १।५५।८, ११६।२२, स्क०मु०-१।८५।१०, वे०-२।२४।४, ३।४६।४, ८।६२।६, १०।१०१।५, ७, वे०सा०-४।५०।३,
*२. अवस्तात्ततो भवतीति अवतः कूपः,*
सा०-१।८५।१०
*३. उद्धृतं कूपम्,*
सा०मु०-१।८५।११
*४. अवस्तात् तं कूपम्,*
सा०मु०-१।११६।९
*५. कूपादिप्रदेशान्,*
सा०-८।६२।६।
*६. अवस्तात् ततं विस्तृतम्,*
सा०-२।२४।४

*७. अवपतितम् अधोगतम्। अधोमुखमिति,*
स्क०-१।८५।१०
*८. आहावम्,*
वे०-१।१३०।२, सा०-१।१३०।२
(आहावलक्षणम् अटवमिव)
*९. रक्षकम्,*
सा०-३।४६।४
*१०. महावीरम्,*
वे०सा०-८।७२।१०, ११
*११. अवटम्,*
सा०-१०।१०१।५
*१२. अवटं द्रोणम्,*
सा०-१०।१०१।६
*१३. अवटवन्निम्नभूतम्,*
सा०-१०।१०१।७
*१४. कूपनामैतत्। कूपं संग्रामाख्यम्,*
सा०-१०।१०१।७

**अव√तन्**

*१. अवस्तात् तनुभूतान्,*
सा०-१०।११६।५
*२. अवततज्यानि कुरु,*
वे०- १०।११६।५, वे०सा०-२।३३।१४
*३. अवाञ्चि कुरु। पराजितानि कुर्वीत्यर्थः,*
सा०-८।१९।२०
*४. अवगतज्यानि कुरु,*
सा०-४।४।५
*५. पतितज्यानि...कुरु,*
वे०-४।४।५

**अवतर**

*अत्यन्तनिकृष्टम्,*
सा०-१।१२९।६

**अव√तॄ**

*१. अवधीत्,*
वे०सा०मु०-१।१०१।५, सा०-१०।१३३।५ सा०मु०-१।९३।४
*२. अवाङ्मुखं कृत्वावधीः,*
सा०-८।९७।१७
*३. अभ्यभवतम्,*
वे०-१।९३।४, १३१।४
*४. विनाशय,*
वे०-१।११।७ (व्यनाशय), ८।९६।१७ (विनाशितवान), १०।१३३।५, वे०सा०मु०- ६।९।१, सा०- ६।२५।२
*५. अनाशयः। अवपूर्वस्तिरतिर्नाशनार्थः,*
सा०-१।१३१।४
*६. हतवान्,*
स्क०-१।११।७, १०१।५
*७. हिंसितवानसि,*
सा०मु०-१।११।७
*८. विवृतद्वारं करोति,*
वे०सा०-९।७४।७

**अव√त्सर**

*१. हविर्गृहीत्वा गच्छति,*
स्क०-१।७१।५
*२. मार्गपार्श्वात् कुटिलमपगच्छति,*
वे०-१।७१।५
*३. त्वद्भयात्पलायते,*
सा०-१।७१।५

**अवत्सार**

*एषामृषीणाम्,*
सा०मु०-५।४४।१०

**अवदत्**

*शास्त्रार्थमब्रुवाणाज्जनात्,*
सा०-१०।११७।७

अव√दह्

*१. अधो निरधमः,*

स्क०-१।३३।७

*२. निर्धमसि,*

स्क०-१।३३।७

*३. योधितवानसि,*

वे०-१।३३।७

*४. दग्धवानसि,*

सा०मु०-१।३३।७

अव√दा

*१. पृथक्करोमि,*

वे०-२।३३।५

*२. अवखण्डयामि पृथक्करोमि,*

सा०-२।३३।५

*३. अपगतक्रोधं करोमि,*

सा०-२।३३।५

अवि√दिश्

*१. आदिशामि,*

सा०-८।७४।१५

*२. अवाङ्मुखमस्मदभिमुखं दिशत दत्त,*

सा०-१०।१३२।६

अव√दुह्

*१. धुक्षस्व,*

वे०-८।१३।२५

*२. अवाङ्मुखमस्मदभिमुखं धुक्षस्व क्षारय। देहीत्यर्थः,*

सा०-८।१३।२५

अवद्य

*१. गर्ह्यम्,*

स्क०-६।६६।४, वे०-४।१८।५,

*२. पापम्,*

सा०-६।६६।४, वे०सा०-१०।१४।८,

सा०मु०-५।५३।१४

*३. ब्रह्महत्यादिरूपं पापम्,*

सा०-४।१८।७

*४. गर्हमिव,*

सा०-४।१८।५

*५. निन्दा,*

सा०-८।६८।१९

अवद्य-भी

*१. उपद्रवभयेन,*

वे०-१०।१०७।३

*२. पापभिया,*

सा०-१०।१०७।३

अवध

*१. हिंसारहितम्,*

वे०-१।१८५।३

*२. अहिंसितम्,*

सा०-१।१८५।३

अव√धा

*१. अवाङ्मुखमपातयन्,*

सा०-१।१५८।५

*२. अधारयतं स्थापितवन्तौ... अवस्तादधारयतम्,*

सा०-१।१८०।३

*३. अवाचीनमदधुः। तिरस्कुर्वन्तीत्यर्थः,*

सा०-४।१३।४

अवहित

*१. अधो निहितः। पतित इत्यर्थः,*

स्क०-१।१०५।१७। वे०-१०।१३७।१ (अधस्ताद् निहितः)

*२. पतितः,*

वे०-१।१०५।१७

*३. पातितः,*

सा०मु०-१।१०५।१७

**अव√धाव्**

*निर्गच्छति,*
सा०-१।१६२।११

**अव√धू**

*१. अवचालयसि स्थानात् प्रच्यावयसि,*
सा०-८।७०।११ (अवचालयेत्),
सा०मु०-१।७८।४
*२. भयेन कम्पयसि,*
स्क०-१।७८।४, ८२।२ (भयेन कम्पितवन्तः शत्रून्)
*३. अवकम्पयत दत्तेत्यर्थः,*
उ०-१०।६६।१४
*४. कम्पयति,*
स्क०-१।८२।२ (कम्पितवन्तः), सा०-१।८२।२, (अकम्पयन्), मु०-१।८२।२ (अकम्पयन् आस्वादनहर्षेण)
*५. अवाङ्मुखं कम्पय। अस्मदभिमुखं गमयेत्यर्थः,*
सा०-१०।१३४।३
*६. अवाङ्मुखं प्रेरितवानसि,*
सा०-८।१४।१४
*७. अभिमुखं प्रेरयत,*
सा०-१०।६६।१४
*८. प्रेरयत,*
वे०-१०।६६।१
*९. अभिगच्छन्ति,*
सा०-६।४७।१४
*१०. गच्छन्ति,*
स्क०-६।४७।१४
*११. ऊर्ध्वं द्युलोकं गच्छन्ति,*
स्क०-६।४७।१४
*१२. अभिगमयसि,*
सा०-१०।१३४।४
*१३. पतन्ति,*
वे०-६।४७।१४

**अवधून्वान**

*१. शत्र्वाकम्पनशीलः,*
स्क०-६।४७।१७
२. परित्यजन्,
सा०-६।४७।१७

**अवध्र**

*१. बाधकरहितम्,*
वे०-७।८२।१०
*२. अहिंसकम्,*
सा०-७।८२।१०
*३. अबाधकम्,*
सा०-७।८३।१०

**अव√ध्वस्**

*विनष्टमभूत्,*
सा०-१०।११३।७

**अव√नक्ष्**

*१. व्याप्नुथः,*
वे०-१।१८०।२
*२. अवस्तात् तदुदयात् पूर्वं व्याप्नुथो देवयजनं गन्तुम्,*
सा०-१।१८०।२

**अवनद्ध**

*बद्धम्,*
स्क०वे०-(निगडेन बद्धम्), सा०मु०-१।११६।२४

**अवनीत**

*१. अधः प्रापिताय,*
स्क०-१।११८।७
*२. अधोनीतम्। असुरैः प्रक्षिप्तमित्यर्थः,*
स्क०-१।११६।८

*३. प्रक्षिप्तम्,*
वे०-१।११६।८, ११८।७
*४. शतद्वारे पीडायन्त्रगृहे अवस्तान्नीताय,*
सा०मु०-१।११८।७
*५. अवाङ्मुखतया असुरैः प्रापितम्,*
सा०मु०-१।११६।८

**अव√नु**

*१. सङ्गच्छन्ति,*
वे०-९।८६।२७
*२. संगच्छन्ते,*
सा०-९।८६।२७

**अव√पत्**

*निपतन्तु,*
सा०-१०।१३४।५

**अव√पद्**

*१. नरके पतति, नोपरि गच्छति,*
वे० - ९।७३।९ सा० - ९।७३।९
(अवस्तान्नरके पतति नोपरि गच्छति)
*२. अवाङ्मुखी पततु,*
सा०-७।१०४।१७
*३. अधः पतत्,*
स्क०-१।१०५।३
*४. अवपन्नं, विपन्नं, प्रभ्रष्टम्,*
सा०मु०-१।१०५।३
*५. हिंस्यते,*
सा०- ४।१३।५, १४।५
*६. हीयते,*
सा०-६।५४।३
*७. न्यूनं भवति,*
वे०-६।५४।३

**अवपदस्**

*१. अवपातयितुः,*
वे०-२।२९।६
*२. आपदः,*
सा०-२।२९।६

**अव√पश्**

*१. अवाङ्मुख सन्नीक्षते,*
सा०-८।६।२९
*२. अवाङ्मुखं प्रसृतैः किरणैः प्रकाशयति,*
सा०-८।६।२९
*३. निरीक्षध्वम्,*
सा०-१०।१७९।१

**अवपश्यत्**

*जानन्,*
सा०-७।४९।३

**अवपान**

*१. पीयतेऽस्मिन्निति पानं ह्रदादिः। ... पानमेवावपान,*
सा०-१०।१०६।२
*२. अतिपिपासितौ,*
वे०-१०।१०६।२
*३. अवक्रम्य स्थितं दूरस्थं पातव्यं सोमम्,*
सा०-७।९८।१
*४. अधोमुखेन पातव्यम्,*
वे०-७।९८।१
*५. अवनीतं ग्रहचमसादिषु पात्रेष्वानीतं पातव्यम् सोमम्,*
सा०-८।४।१०
*६. उदकपानस्थानम्,*
वे०-८।४।१०
*७. अवकलनात् श्रद्धाऽप्रतिहननात् सोमपानम्,*
उ०-१०।४३।२
*८. अवाङ्मुखचमसपानेषु विषयेषु,*
सा०-१।१३६।४

**अव√भा**

*१. स्वमहिम्ना स्फुरति,*
सा०-१।१५४।६

**अव√भिद्**

*१. अवाङ्मुखं यथा भवति,*
सा०-२।११।२
*२. अवभिन्नवान्,*
उ०-१०।६९।१ (सङ्गृह्य भिन्नवान्), वे०-२।११।१८
*३. अत्यन्तमभैत्सीत्,*
सा०-४।१९।४
*४. अधस्तात् अभिनत्,*
वे०-४।१९।४
*५. अवाङ्मुखं कृत्वा अच्छिनत्,*
सा०-१०।६९।११
*६. वज्रेण विदारितवान्,*
उ०सा०-१०।८।९

**अव√भृ**

*१. अपहरति,*
वे०सा०मु०-१।१०४।३
*२. अधो धारयति,*
स्क०-१।१०४।३, सा०-३।२९।३ (अधोमुखां धारय)
*३. अधो प्रापयति। पृथिव्यां पातयति,*
स्क०-१।१०४।३
*४. अवाङ्मुखमवकृत्य प्राणं हतवान्,*
सा०-१।१३०।७
*५. अधो हतवान्,*
वे०-१।१३०।७
*६. अधः पातयतु,*
सा०-२।२०।६
*७. अवयुत्य पृथक्कृत्य हतवानसि,*
सा०-१०।१७१।२
*८. अवाहरः,*
वे०-१०।१७१।२
*९. अवधारयत,*
सा०-१०।११३।५
*१०. संपादयति,*
सा०-८।१९।२३
*११. अवाङ्मुखं हरति,*
सा०-८।१९।२३
*१२. उपसंहरति,*
सा०-८।१९।२३

**अवभृथ**

*अन्त्यदिवसम्,*
सा०-८।९३।२३

**अवम**

*१. सनिकृष्टम्,*
स्क०-१।१०५।४, स्क०सा०मु०- १।१०८। ९
*२. सनिकृष्टे यज्ञे,*
स्क०-१।१०१।८
*३. अर्वाचीने,*
सा. मु०-१।१०१।८
*४. सर्वेषां देवानामादिभूतम्,*
सा०मु०-१।१०५।४
*५. अन्तिकनामैतत्। नित्यसंनिहिते युवाम्,*
वे०-२।३५।१२ (अन्तिकमाय), सा०-१।१८५।११
*६. आसन्ने,*
वे०-१।१८५।११, ४।१।५, सा०-७।७१।३
*७. समीपे वर्तमानैः,*
सा०-३।३०।१६
*८. अन्तिकागतैः,*
वे०-३।३०।१६

*९. अधोमुखानि,*
वे०सा०-३।५४।५
*१०. अर्वाचीनः प्रत्यासन्नः सन्,*
सा०-४।१।५, ६।२१।५, (अर्वाचीनस्य)
*११. दिवि,*
सा०मु०-५।६०।६
*१२. अधमा,*
सा०-६।२५।१
*१३. अधमं त्रपुसीसादिकम्,*
सा०-७।३२।१६
*१४. निकृष्टाभिः,*
स्क० सा०-६।६२।११

√अश्

*१. प्राप्नोति,*
उ०सा०-१०।३६।४, ३७।६, ९४।२, स्क०- १।११४।२, वे०- २।१९।७, ३३।६, ३।४५।३, वे०सा०- २।१९।८, २१।५, ३१।७, ६।१।१३, ७।३२।२६, ९।११८।३, १०।९२।७, वे०सा०मु०- १।६९।३, ११४।३, ५।६४।३, सा०- ३।५९।२, ४।४।१४, ७।४७।२, ६५।२, ८।२७।२२, ९।९१।५, सा०मु०- १।९४।२, ५।३०।२, ६।५।७
*२. प्राप्तवन्तः,*
स्क०-१।२०।२। प्राप्ताः
वे०मु०-१।२०।२
*३. रक्षणाय प्राप्नुवन्ति,*
वे०-१०।१७६।१
*४. व्याप्नोति,*
उ०वे०सा०- १०।३९।११, स्क०-१। ६९। ३, स्क०वे०सा०मु०- १।७०।१, वे०- ३।५९।२, वे०सा०- २।३३।२, ७।६६।११, ८।१।२, सा०-२।१९।७, ३३।६, ३।४५।३, ७।६५।२, १०। १७६। १ सा०मु०- १।११४।२, मु०- ६।१।१३,
*५. व्याप्तवन्तः,*
उ०सा०- १।२०।२
*६. आप्नोति,*
स्क०-१।९४।२
*७. लभेमहि,*
वे०- १।११४।२
*८. तवानुग्राह्याः बुद्धौ भवेम,*
स्क०- १।११४।३
*९. स्थितवन्तः,*
वे०-५।३०।२
*१०. भुञ्जीमहि,*
वे०-४।४।१४, सा०-६।१।१३
*११. पिबति,*
वे०सा०-७।७३।२, सा०-९।९८।१२
*१२. पानयोग्यो भवति,*
सा०-१०।८५।४
*१३. अमृता भवेम,*
वे०-१०।३७।६
*१४. भक्षयति,*
वे०- १।१६२।९ (भक्षितवती) वे०सा०- १०।८७।१७, सा०- १।१६२।९, ९। ६७।३१ (परिपूतं पापरहितमन्नं भक्षयति), १०।८५।३ (भक्षयितुमर्हति)

अशन्

*१. अशनवतो द्युलोकस्य,*
उ०सा०-१०।६८।८
*२. अश्मना व्याप्तया शिलया,*
सा०-१०।६८।८
*३. अश्मना मेघेन,*
उ०-१०।६८।८
*४. शिलया,*
वे०-१०।६८।८

५. *महत्तया*,
वे०-४।२८।५
६. *अशनपरेण बलेन*,
सा०-४।२८।५

**अशनि**

१. *वज्रम्*,
सा०-१।५४।४, १०।८७।५
२. *शक्तिम्*,
स्क०-१।५४।४
३. *अयोधयः*,
वे०-१।५४।४
४. *अशनिः शक्तिरिहोच्यते*,
स्क०-१।८०।१३
५. *वैद्युताग्निना*,
सा०-२।१४।२
६. *आयुधम्*,
वे०-६।६।५
७. *शत्रूणां तदेतदायुधम्*,
सा०-८।२७।१८
८. *दीप्तिभिः*,
सा०-१०।८७।४

**अशनिमत्**

*अशनिना युक्तम्*,
सा०-४।१७।१३

**अशस्**

१. *अस्तोत्रस्य*,
वे०-२।३४।९
२. *भक्षकस्य*,
सा०-२।३४।९

**अश्न**

१. *सर्वत्र व्याप्तः। न हि वायुरहितः कश्चित्प्रदेशोऽस्ति, अश्नः व्यापनशीलः*,
सा०-१।१६४।१
२. *वायुः व्याप्तः*,
वे०-१।१६४।१
३. *व्यापकः*,
सा०-१।१७३।२
४. *अशनपरः*,
वे०-१।१७३।२
५. *अश्नाति भक्षयति प्राणिजातमिति*,
सा०-२।१४।५
६. *अश्नुते स्वतेजसा सर्वं व्यापनोतीत्यश्नः कश्चिदसुरः*,
सा०-२।१४।५, २०।५ (अश्नुते स्वतेजसा सर्वं जगदित्यश्तः कश्चिदसुरः)
७. *मेघस्य*,
वे०-२।२०।५, ६।४।३
८. *व्यापनशीलस्यापि राक्षसादेः*,
सा०मु०-६।४।३
९. *अश्मभि ग्रावभिः करणभूतैः*,
सा०-८।२।२

**अश्नुवत्**

*प्राप्नुवन्*,
स्क०सा०मु०-१।११६।२५

**अश्मन्**

१. *अपरिमितपाषाणे पर्वतादौ*,
सा०-१।१३०।३
२. *पर्वते महति*,
वे०-१।१३०।३
३. *पाषाणात्*,
सा०-२।१।१
४. *उपलान्*,
सा०-३।२९।६
५. *पर्वतम्*,
सा०-४।१६।६
६. *शिलोच्चयम्*,
वे०-४।१६।६, ६।४३।३

*७. गवामावरकं पर्वतम्,*
सा०मु०-५।३०।४
*८. वलासुरेण निहितस्य पर्वतस्य,*
सा०-६।४३।३
*९. शिलासदृशम्,*
वे०- १।१२१।९, वे०सा०-९।११२।२ (शिलाभिः)
*१०. मेघः,*
स्क०-६।४३।३, वे०-१।१२।३, वे०सा०- ९।१०८।६, सा०- २।१।१, ४।१६।६
*११. अश्नुते व्याप्नोत्यन्तरिक्षमित्यश्मा मेघः,*
सा०-२।१२।३। सा०मु०-५।३०।८ (मेघमिव स्थितम्)
*१२. वज्रम्,*
वे०-२।३०।५, ५।३०।८, ७।१०४।१९, वे०सा०-४।२२।१
*१३. अश्मसदृशेन वज्रेण,*
सा०-२।१४।६, ३०।५, (अश्मवत्कठिनं वज्रम्)
*१४. शीघ्रं शत्रोर्व्यापकम्,*
सा०मु०-१।१२१।९
*१५. व्याप्तारं शुष्णं नामासुरम्,*
स्क०-१।१२१।९
*१६. धनम्,*
वे०-५।३०।४
*१७. व्यापकः आयुधः विशेषः,*
सा०-१।१७२।२
*१८. सर्वत्र व्याप्तः,*
सा०मु०-५।४७।३
*१९. मणिभिरिवेत्यौपमिकम्,*
वे०-५।४७।३
*२०. अश्मवदभेद्या दृढा भवतु,*
सा०-६।७५।१२
*२१. अशनिम्,*
वे०सा०-१०।८९।१२, सा०-७।१०४।१९
*२२. अभिषवग्राव्णि निधीयमानम्,*
वे०-७।८८।२
*२३. अभिषवार्थे पाषाणेऽवस्थितम्। अभिषुतमित्यर्थः,*
सा०-७।८८।२

**अश्म-चक्र**

*१. व्याप्तक्रमणमश्ममयचक्रं वा,*
सा०-१०।१०१।७
*२. परितः प्रेर्यमाणानि व्याप्तान्यायुधानि चक्रस्थाने भवन्ति,*
वे०-१०।१०१।७

**अश्म-दिद्यु**

*१. व्याप्तायुधाः,*
वे०सा०मु०-५।५४।३
*२. अश्मसारमयायुधः,*
सा०- ५।५४।३

**अश्मन्मय**

*१. मेघमयानि पाषाणमयानि वा। मेघसम्बन्धीनि वा पाषावद् दृढानि वेत्यर्थः,*
उ०-१०।६७।३
*२. अश्ममयानि,*
सा०-१०।६७।३

**अश्मन्मयी**

*१. पाषाणैर्निर्मिता,*
सा०-४।३०।२०
*२. शिलामयीनाम्,*
वे०-४।३०।२०
*३. अयः शिलासारभूताभिः,*
सा०-१०।१०१।१०
*४. ग्रावमयीभिः,*
वे०-१०।१०१।१०

**अश्मन्वती**

*अश्मन्वती नाम नदी,*
वे०सा०-१०।५३।८

**अश्मव्रज**

*१. अश्मा व्याप्तो मेघः। तत्र व्रजन्तीनाम्,*
सा०-१०।१३९।६
*२. व्याप्तसङ्घानाम्,*
वे०-१०।१३९।६

**अश्म-हन्मन्**

*१. अश्मसारभूतस्यायसो विकारैर्हननसाधनैस्तैरायुधैः,*
सा०-७।१०४।५
*२. व्याप्तहननैः,*
वे०-७।१०४।५

**अश्मास्य**

*१. अश्मवत् दृढतरास्यम्,*
सा०-२।२४।४
*२. अशनवन्तमास्यन्दनवन्तम्,*
सा०-२।२४।४ (यास्क०- १०।१३)
*३. व्यापनवन्तमासेचनवन्तमिति तस्याथः,*
सा०-२।२४।४
*४. अश्मपिहितास्यम्,*
वे०-२।२४।४

**अश्व, श्वा**

*१. वडवाः,*
वे०सा०-३।१।४
*२. व्यापनशीलाः, व्याप्तः, व्यापकः,*
सा०-१।११५।३, १६४।३४, ४।३९।३, ६, ५।८३।६, १०।१३६।५
*३. तुरगाः,*
सा०मु०- १।११५।३
*४. वायोः अशिता भोक्ता,*
सा०-१०।१३६।५
*५. कालाश्वस्य,*
वे०-१।१६४।३५
*६. अश्वसंबन्धिदधीचः,*
सा०मु०-१।८४।१४
*७. वोढारम्,*
सा०-४।१०।१
*८. वाहनम्,*
सा०-९।९४।५
*९. वेगवन्तम्,*
वे०-४।१०।१
*१०. वृषणो रेतसः सेक्तारः,*
सा०-८।२३।११

**आश्वघ्न**

*१. आश्वघ्ननाम्नः ऋषेः,*
वे०-१०।६१।२१
*२. अश्वघ्नोऽश्वमेधयाजी मनुः तस्य पुत्रः,*
सा०-१०।६१।२१

**अश्वजित्**

*अश्वानामपि जेता,*
सा०-९।५९।१

**अश्वदा**

*१. स्तोतृभ्यो यष्टृयश्चाश्वान् दात्री,*
स्क०-१।११३।१८
*२. अश्वानां दातारः,*
वे०-५।४२।८, सा०-१०।१०७।२
*३. अश्वानां दात्री,*
सा०मु०-१।११३।१८
*४. बहूनामश्वानां दातारः,*
सा०मु०-५।४२।८

**अश्वदा-तर**

*१. अश्वानां दातृतमः,*

सा०-८।७४।१५

*२. अश्वानामतिशयेन दाता,*

वे०-८।७४।१५

**अश्व-दावन्**

*अश्वानां दातः,*

वे०सा०मु०-५।१८।३

**अश्व-निर्णिज्**

*१. अश्वरूपे अश्वाकृतियुक्ते यजमाने,*

उ०-१०।७६।३

*२. अश्वरूपे,*

वे०-१०।७६।३

*३. निर्णिगिति रूपनाम। अश्वरूपे। अपहृतैरश्वैर्वृत इत्यर्थः,*

सा०-१०।७६।३

**अश्व-पति**

*अश्वादीनां स्वामी,*

वे०-८।२१।३। सा०-८।२१।३ (अश्वानां स्वामी)

**अश्व-पर्ण**

*१. अश्वानां पतनं गमनं येषामस्ति तादृशैः,*

सा०मु०- १।८८।१

*२. अश्वं व्याप्तं पर्णं पतनं गमनं येषाम्। अन्तरिक्षं व्याप्य वर्तमानैरित्यर्थः,*

सा०-१।८८।१

*३. अश्वपतनैः,*

स्क०-१।८८।१, वे०- ६।४७।३१

*४. अश्वपतना अश्वगामिनः। अश्ववाराः,*

स्क०-६।४७।३१

**अश्व-पस्त्य**

*व्याप्तगृहम्,*

वे०सा०-९।८६।४१

**अश्व-पृष्ठ**

*१.सर्वतो व्याप्तपृष्ठम्। पृष्ठशब्दः सर्वाङ्गं लक्षयति। व्याप्तकृत्स्नाङ्गमित्यर्थ,*

सा०-८।२६।२४

*२. व्याप्तपृष्ठम्,*

वे०-८।२६।२४

**अश्व-पेशस्,**

*१. अश्वरूपाम्,*

वे०-२।१।१६

*२. पेश इति रूपनाम। अश्वेन निरूपणीयाम्,*

सा०-२।१।१६

**अश्व-बुध्ना**

*१. अशनबन्धनाः। हविराहारवस्थिता इत्यर्थः,*

उ०-१०।८।६

*२. व्याप्तान्तरिक्षाः,*

वे०-१०।८।३

*३. व्याप्तमूला अशनबन्धना वा। हविराहारान्विता इत्यर्थः,*

सा०-१०।८।३

**अश्व-बुध्य**

*१. अश्वैर्ये बोध्यन्ते तेऽश्वबुध्याः, तान् अश्वबुध्यान्। उत्कृष्टैरश्वैरुद्भासितानित्यर्थः,*

स्क०-१।९२।७

*२. अश्वानां बोधकान्,*

स्क०-१।१२१।१४

*३. अश्वैर्बोध्यिवान्,*

वे०-१।९२।७

४. *अश्वैः बोद्धव्यानि,*
वे०-१।९२।७
५. *अश्वाः बुध्या विद्यमानत्वेन बोद्धव्या येषु वाजेषु तान्,*
सा०मु०-१।९२।७
६. *अश्वाः बुध्याः बोद्धव्याः येन धनेन तादृशम्,*
सा०मु०-१।९२।८
७. *अश्वैरुद्भासितम्,*
स्क०-१।९२।८
८. *अश्वबुध्नान्। वर्णव्यापत्त्या यकारः। अश्वमूलान्। अश्वैर्हि राजानो धानान्यन्नानि च लभन्ते। अतोऽन्नानो तन्मूलत्वम्,*
सा०- १।९२।७
९. *अश्वानां बोधकान्। अश्वा यावद्भिर्लभ्यन्ते तावदित्यर्थः,*
सा०मु०-१।१२१।१४
१०. *अश्वबुध्नान्। छान्दसो वर्णविकारः। अश्वमूलान्। अश्वप्रमुखानित्यर्थः,*
सा०-१।१२१।१४

**अश्वमिष्टि**

१. *अश्वम् इच्छसि,*
वे०-२।६।२
२. *व्यापकयज्ञः,*
सा०-२।६।२
३. *आशु क्रियमाणं कर्माश्वम्। तदिच्छतीत्यश्वमिष्टिः,*
सा०-२।६।२

**अश्व-मेध**

*राजर्षये,*
सा०मु०-५।२७।४, ६

**अश्व-युज्**

१. *अश्वैर्युक्ताः,*
वे०-५।५४।२
२. *गमनाय रथेऽश्वानां योक्तारः,*
सा०मु०-५।५४।२

**अश्व-यूप**

*अश्वबन्धनयूपाय,*
सा०-१।१६२।६

**अश्व-राधस्**

१. *लब्धाश्वधनाः,*
वे०-५।१०।४
२. *व्याप्तधनाः,*
वे०सा०-१०।२१।२
३. *अश्वधनाः,*
सा०-५।१०।४

**अश्ववत्**

*अश्वयुक्तम्,*
वे०-९।१०५।४, सा०-९।१०५।४
(अश्वयुक्तं धनम्)

**अश्व-विद्**

१. *अश्वदः,*
वे०-९।५५।३
२. *अश्वस्य लम्भकः,*
वे०सा०-९।६१।३
३. *अश्वप्रदः,*
सा०-९।५५।३

**अश्वश्चन्द्रा**

१. *अश्वैश्चन्द्रैः कान्तैर्युक्ताः,*
स्क०-६।३५।४
२. *ह्लादकाश्वाः,*
वे०-६।३५।४
३. *अश्वैराह्लादयन्तीः,*
सा०-६।३५।४

**अश्वसा**

*अश्वानां दाता,*

सा०-९।२।१०

**अश्वसा-तम**

*१. अश्वयोः सम्भक्ततमः,*

वे०-१।१७५।५

*२. अश्वोपलक्षितबहुधनदास्तवम्,*

सा०-१।१७५।५

**अश्व-सूनृता**

*१. कल्याणर्निगच्छच्छब्दे,*

वे०-५।७९।१

*२. कल्याणाश्वे,*

वे०-५।७९।१

*३. अश्वार्था प्रियसत्यात्मिका स्तुति-वाक् यस्याः सा.,*

सा०मु०-५।७९।१

**अश्व-हय**

*१. अश्वयुक्तेन सदा गन्ता,*

उ०सा०-१०।२६।५

*२. व्याप्तहयैः,*

वे०-९।९६।२।

*३. अश्वानां प्रेरकः,*

वे०-१०।२६।५

*४. व्याप्तैः,*

सा०-९।९६।२

**अश्वाजनी**

*१. अश्वाः व्यापनशीलाः मेघाः। तानजति गच्छतीत्यश्वाजनी विद्युत्,*

सा०मु०-५।६२।७

*२. अवलम्बमाना,*

वे०-५।६२।७

*३. कशे,*

वे०-६।७५।१३

*४. अश्वानां क्षेप्त्रि कशे,*

सा०-६।७५।१३

**अश्वा-मघ**

*अश्वधनौ,*

वे०सा०-७।७१।१

**अश्ववत्**

*१. अश्वसहितम्,*

स्क०-५।५७।७, सा०- ९।६९।८

*२. सम्बद्धाश्वम्,*

वे०-८।७२।६

*३. संवृद्धाश्ववत्,*

सा०-८।७२।६

*४. अश्वयुक्तम्,*

वे०सा०-८।२२।१७, सा०-९।४२।६, ६३।१८, मु०-५।५७।७,

*५. अश्वैरुपेतम्,*

सा०-१।४८।१२, ५।५७।७, (बहु-भिरश्वैरुपेतम्), ७।७७।५, ९४।५, ८। ४६।५ (अश्वैश्चोपेतम्)

**अश्वेषित**

*१. अश्वादिभिः आनीतम्,*

वे०-८।४६।२८

*२. अश्वैः प्रापितम्,*

सा०-८।४६।२८

**अश्वया**

*१. अश्वेच्छया,*

वे०सा०-९।६४।४

*२. अश्वप्रदानेच्छया,*

सा०-८।४६।१०

**अश्वयु**

*१. अश्वानिच्छन्,*

वे०-९।३६।६ (अश्वादीन् इच्छन्),
सा०-९।३६।६, सा०मु०-१।५१।१४

*२. अश्वादीन् स्तोतृभ्यः इच्छन्,*
वे०-१।५१।१४
*३. अश्वांश्चेच्छन्,*
वे०-४।३१।१४
*४. अश्ववान्,*
वे०सा०-४।३१।१४

**अश्वायत्**

*१. अश्वमिच्छते,*
स्क. वे०-६।४५।२६
*२. अश्वानिच्छन्तः,*
वे०सा०-४।१७।१६, ७।३२।२३, १०।१६०।५, सा०-१०।१३१।३
*३. अश्वानात्मनः इच्छते,*
सा०-६।४५।२६

**अश्व्य**

*१. अश्वसम्बन्धी,*
सा०-६।४४।१२, ७।१८।१९, सा०मु०-१।३२।१२, ११७।१२, ११९।९, ५।५२।१७। (तत्संबन्धि)
*२. अश्वपृष्ठे साधुः स्थिरयानः अश्व्यः,*
स्क०-१।३२।१२,
*३. अश्वपृष्ठस्थः,*
वे०-१।३२।१२
*४. अश्वैरुत्पादितः,*
सा०मु०-१।७४।७
*५. अश्वेषु भवः,*
वे०-१।७४।७
*६. अश्वेषु भवः। हेषितशब्दः,*
स्क०- १।७४।७
*७. शफशब्दः,*
स्क०-१।७४।७
*८. अश्वस्यावयवभूतम्,*
स्क०-१।११७।२२
*९. अश्वस्य,*
वे०-१।११७।२२
*१०. अश्वस्यावयवभूतेन,*
स्क०-१।११९।९
*११. अश्वसङ्घम्,*
वे०-४।२८।५, ४१।१०, ७।१६।१०, वे०सा०-८।१३।२२, २१।१०, २५।२३, २७।६, सा०- ७।९२।३
*१२. अश्वसमूहम्,*
उ०-१०।४८।४, सा०-४।२८।५, ४१।१०
*१३. अश्वसमूहलक्षणानि,*
स्क०-६।४४।१२
*१४. अश्वसमूहात्मकम्,*
स्क०वे०-५।६१।५, (अश्वसमूहम्) वे०-६।४४।१२, सा०मु०-५।५२।१७, ६१।५। (तत्समूहात्मकम्)
*१५. अश्वसमूहेन। तदीयेन मांसेनेत्यर्थः,*
सा०-१०।८७।१६
*१६. अश्ववृन्दानि,*
वे०-७।६७।९
*१७. अश्वात्मकानि,*
सा०-७।१६।१०, ८।३४।१४, सा०मु०-५।६१।५,
*१८. अश्वहितानि,*
सा०-८।३४।१४
*१९. अश्वमयम्,*
वे०सा०-१०।४८।४
*२०. अश्वार्हं रथम्,*
वे०सा०-१०।९३।१२
*२१. अश्वेषु भवम्,*
वे०सा०-९।१०८।६
*२२. अश्वसहितम्,*
सा०-९।७२।९

२३. *अश्वहितम्,*
वे०-९।७२।९
२४. *अश्वकुशलोऽश्व्यः,*
सा०-८।६६।३
२५. *अश्वेषु कुशलः,*
वे०-८।६६।३
२६. *अश्वसम्बन्धीनि,*
सा०-७।१८।१९

**अश्विय**

१. *अश्वसमूहान्,*
वे०-४।१७।११
२. *शत्रुसम्बन्धिनोऽश्वसमूहान्,*
सा०-४।१७।११

**अश्विन्**

१. *अश्विदेवौ,*
सा०-३।२०।१, ४।२५।३, ७।४०।५, ८।८।२३, १०।१८४।३, सा०मु०-१।३४।१,८, ११,१२, ४४।२, १८६।१०
२. *ईश्वरौ,*
वे०-१।३।१,
३. *अश्ववान्,*
उ०वे०सा०-१०।७५।९ वे०-२।२७।१६, ५।४।११, वे०सा०-४।३७।५, ९।४।१०
४. *अश्वयुक्तान्,*
सा०-८।३२।९
५. *अश्ववानग्निः,*
सा०-७।१।१२
६. *अश्वैरन्वितौ,*
सा०-६।६२।१
७. *बह्वश्वोपेतम्,*
सा०-५।४।११, ८।४।९ (बहुभिरश्वैरुपेत एव भवति। न कदाचिदश्वेर्वियुज्यते)
८. *अश्वी,*
वे०-८।४।९
९. *अश्वोपेतः,*
सा०-४।२।५
१०. *देवानां भिषजौ,*
सा०- ३।२९।६, सा०मु०-५।२६।९
११. *प्राज्ञौ,*
वे०-१।३४।१
१२. *यथा शोभनः कश्चित् पुरुषः दुस्तरान्मार्गान् शीघ्रमतिक्रामति तद्वत्,*
सा०-२।२७।१६
१३. *स्वोदरे गर्भभूतौ,*
उ०सा०-१०।१७।२

**अष्टवे**

१. *आप्तुम्,*
वे०-४।३०।१९
२. *व्याप्तुम्,*
सा०-४।३०।१९

**अशनत्**

१. *अवभ्यवहरन्तौ,*
सा०-७।६७।७
२. *भक्षयन्तौ भञ्जन्तौ,*
सा०-८।५।३१

**अशत्रु**

१. *शत्रुरहितः,*
वे०-५।२।१२, वे०सा०-८।९६।१६, सा०-१०।१३३।२
२. *अविद्यमानशत्रुम्,*
उ०सा०-१०।२८।६
३. *अकण्टकम्,*
सा०-५।२।१२

**अशस्तवार**

*स्तोतृभिरप्रार्थितधनः,*
वे०सा०-१०।९९।५

**अशस्ति**

*१. शत्रून्,*
वे०-१।१००।१० सा०मु०-१।१००।१०
(अशंसनीयान् शत्रून्)
*२. अशंसितॄणाम्,*
स्क०- १।१००।१०
*३. अभिशस्तीः,*
सा०-४।४८।२, ७।१८।५
*४. अकीर्तिः। शत्रुकृतान्ययशांसीत्यर्थः,*
सा०-६।६८।६
*५. अप्रशंसाः,*
स्क०-६।६८।६
*६. बाधाः,*
वे०-६।६८।६
*७. अशंसनीया अशंसनीयस्य दुःखस्य कीर्तयित्रीर्वा शत्रुभूताः प्रजाः,*
सा०-६।४८।१७
*८. अशंसितॄन् वैरिणोऽस्माकम्,*
स्क०-६।४८।१७
*९. अरातीः,*
वे०-६।४८।१७
*१०. अहिंसितः,*
वे०-७।१८।५

**अशस्ति-हन्**

*१. रक्षोहा,*
वे०-९।६२।११, वे०सा०-९७।२, १०।५५।८
*२. राक्षसानां हन्ता,*
सा०-९।६२।११
*३. स्तोत्रशंसनरहितानां शत्रूणां हन्ता इन्द्र,*
सा०-८।८९।२
*४. दैव्यानामशस्तीनां हन्ता,*
सा०-८।९९।५
*५. अशस्तीनां हन्ता,*
वे०-८।९९।५

**अशास्य**

*१. पुरुषेण अशिष्यं शासितुमशक्यं चपलत्वात्,*
वे०-८।३३।१७
*२. पुरुषेणाशिष्यं शासितुमशक्यं प्रबलत्वादिति,*
सा०-८।३३।१७

**अशिपदा**

*१. अन्नस्य स्थानभूताः,*
वे०-७।५०।४
*२. शिपदं नाम रोगविशेषः,*
सा०-७।५०।४

**अशिमिद, दा**

*१. अन्नस्य वर्धयित्र्यः,*
वे०-७।५०।४
*२. अहिंसाप्रदाः,*
सा०-७।५०।४

**अशिव**

*१. शिवं सुखम्, ततोऽन्यदशिवं दुःखम्। तत्करत्वादत्रासुरा अशिवा उच्यन्ते ... दुःखकरेणासुरसमूहेन,*
स्क०-१।११६।२४
*२. निगडेन,*
वे०-१।११६।२४
*३. दुःखकारिणः असुरस्य संबन्धिनीः,*
सा०-१।११७।३
*४. शठप्रज्ञाः,*
स्क०-१।११७।३
*५. दुःखहेतुना दाम्ना,*
सा०मु०-१।११६।२४
*६. असुरवर्गस्य,*
मु०-१।११७।३

*७. असुखकारिणा,*
सा०-६।४४।२२(असुखकरस्य बलस्य),
सा०मु०-१।११७।१७
*८. दुःखकरेण,*
उ०सा०-१०।२३।५ (असुखकराणि। दुःखकराणीत्यर्थः।), स्क०-१।११७।१७,
*९. क्रुद्धेन पौरहितेन,*
वे०-१।११७।१७
*१०. परनिन्दादीनि कुर्वाणास्त्वत्परिचर्यां त्यजन्तोऽभद्राः,*
सा०-५।१२।५
*११. अभद्राः,*
वे०-५।१२।५
*१२. असुखः शत्रुः यस्य,*
स्क०-६।४४।२२
*१३. अशुभाः,*
सा०-१०।९५।१५
*१४. अशोभनरूपोऽप्रकाशमानः सन्,*
सा०-१०।१२४।२

**अशिश्वी**

*१. शिशुना वत्सेन विरहिता अस्मदीये गृहेऽशयाना वा सत्यः,*
सा०-१।१२०।८। मु०-१।१२०।८ (शिशुना वत्सेन विरहिता),
*२. शिशवो बालाः वत्सकाः तद्रहिताः,*
स्क०-१।१२०।८
*३. शिशवो न भवन्तीत्यशिश्वीः,*
सा०-३।५५।१६
*४. शिशुवर्जिताः,*
वे०-१।१२०।८, सा०-३।५५।१६ (शिशुरहिताः)
*५. वत्सवर्जिता,*
वे०-३।५५।१६

**अशीति**

*अशीतिसंख्याकैः अश्वैः,*
सा०-२।१८।६

**अशीर्षन्**

*शिरोवर्जितः,*
वे०सा०-४।१।११

**अशुष**

*१. आशोषयितारम्,*
सा०-१।१७४।३
*२. अशान्तम्,*
सा०-१।१७४।३
*३. शोषरहितम्,*
वे०-१।१७४।३
*४. शूषमिति सुखनामैतत्,*
सा०-४।१६।१२
*५. शत्रुभिरशोष्यम्,*
वे०-४।१६।१२
*६. अशुष्कस्य। सम्पूर्णबलस्य,*
सा०-६।२०।४
*७. शोषयितुमशक्यस्य,*
वे०-६।२०।४
*८. शोषकरहितम्,*
सा०मु०-१।१०१।२
*९. अशोष्यम्। अन्येन केनचित् हन्तुमशक्यमित्यर्थः,*
स्क०-१।१०१।२। वे०-१।१०१।२ (अशोष्यम्),
*१०. शोषकरहितम्,*
सा०मु०-१।१०१।२
*११. शोषयितुमशक्यं प्रबलम्,*
सा०-६।३१।३
*१२. शोषयितुमशक्यम्,*
वे०-२।१९।६, ६।३१।३

*१३. अन्येन शोषयितुं विनाशयितुम-शक्यम्,*
स्क०-६।३१।३
*१४. केनाप्यशोषणीयम्,*
सा०-२।१४।५, १९।६, (न केनापि शोषणीयम्),
*१४. स्वयं न शुष्यति,*
वे०-२।१४।५

**अशृथित**

*अन्यैरशिथिलीकृताः,*
वे०सा०-१०।९४।११

**अशेव**

*१. असुखम्,*
वे०-७।३४।१३, १०।५३।८
*२. असुखकरी,*
सा०-७।३४।१३
*३. शेवमिति सुखनाम। येऽसुखभूताः,*
सा०-१०।५३।८

**अशेषस्**

*१. अनपत्यस्य,*
वे०-७।१।११
*२. अपुत्राः,*
सा०-७।१।११

**अश्रद्ध**

*श्रद्धारहितान्,*
वे०- ७।६।३, सा०-७।६।३ (यज्ञादिषु श्रद्धारहितान्)

**अश्रम**

*१. श्रमवर्जितैः,*
वे०- ७।६९।७
*२. श्रमरहिताः,*
सा०-६।२१।१२
*३. श्रान्तिमगच्छन्तः,*
वे०-६।२१।१२

**अश्रमण**

*१. श्रमवर्जिताः,*
वे०-१०।९४।११
*२. श्रमणवर्जिताः,*
सा०-१०।९४।११

**अश्रमिष्ठ**

*अश्रान्ततमाः,*
वे०सा०-४।४।१२

**अश्रात**

*१. अशृतः,*
वे०-१०।१७९।१
*२. अपक्वः,*
सा०-१०।१७९।१

**अश्रान्त**

*१. उपार्जनखेदेन अखिन्नाः सन्तः,*
उ०-१०।६२।११
*२. कर्मसु अनलसाः सर्वकर्म कुर्वन्तो वयम्,*
सा०-१०।६२।११

**अश्रित**

*१. आत्मन्यधिष्ठितम्,*
वे०-४।७।६
*२. प्राणिभिर्दाहभयात् असेवितम्, दुरासदमित्यर्थः,*
सा०-४।७।६

**अश्रीर, रा**

*१. अश्लीलम्,*
सा०-६।२८।६
*२. अशोभनावयवम्,*
वे०-६।२८।६
*३. न श्रीरश्रीः। तदस्यास्तीत्यश्रीरः। मत्वर्थीयो रः। गुणैर्विहीनः कुत्सितः,*
सा०-८।२।२०

*४. विगुणः,*
वे०-८।२।२०
*५. अश्रीका,*
सा०-१०।८५।३०
*६. श्रीरहिता,*
वे०-१०।८५।३०

**अश्रु**

*बाष्पम्,*
सा०-१०।९५।१३

**अश्वथ**

*१. अश्वैः थर्वति चरति गच्छति यः सोऽश्वथः दिवोदासः,*
स्क०-६।४७।२४
*२. अश्ववानेतत्संज्ञः प्रस्तोकः,*
सा०-६।४७।२४

**अश्वत्थ**

*१. व्याप्नुवन्तम्,*
वे०-१।१३५।८
*२. पर्वतादिव्याप्तिप्रदेशे स्थितम्,*
सा०-१।१३५।८

**अषतर**

*१. अभिलषिततराणि,*
वे०-१।१७३।४
*२. व्याप्ततराणि वा हवींषि,*
सा०-१।१७३।४

**अषाढ, ढा**

*१. अनभिभूतः स्क०-*
उ०वे०सा०-१०।४८।११, स्क०- १। ९१।२१ (अन्यैः अनभिभूतपूर्वम्), वे०-३। १५।४, वे०सा०मु०- १।५५।८, सा०-६।१९।२ (शत्रुभिरनभिभूतः), ७।२०।३ (स्वयं च केनाप्यनभिभूतः), २८।२ (शत्रुभिरनभिभूतः),
*२. असोढः,*
वे०-१।९१।२१ (शत्रुभिरसोढः), ६। १९।२, ७।२०।३, २८।२, वे०सा०-८। ७०।४, ९।९०।३, सा०- ३।१५।४ (शत्रुभिर, सोढोऽपराजितः। स्वयं शत्रूञ्जयतीत्यर्थः),
*३. शत्रूणामभिभवित्रे,*
सा०-८।३२।२७
*४. शत्रुभिरनभिभवनीयम्,*
सा०मु०-१।९१।२१

**अष्टन्**

*१. अष्ट,*
उ०वे०- १०।२७।१५, वे०-१।३५।८, ८।२।४१, वे०सा०-१।१२६।५,
*२. अष्टसंख्यकाः,*
सा०-८।२।४१, १०।२७।१५
*३. अष्टाभिः अश्वैः,*
सा०-२।१८।४
*४. प्राच्याद्याश्चतस्रो दिश आग्नेय्याद्याश्चतस्रो विदिशः इत्येवमष्टौ दिशः,*
सा. मु०-१।३५।८,
*५. चतस्रो दिशश्चतस्रोऽवान्तरदिशः ता एता अष्टौ,*
स्क०-१।३५।८

**अष्टकर्णी**

*१. विस्तृतकर्णीः,*
वे०-१०।६२।७
*२. विस्तृतकर्णाः। उपलक्षणमेतत्। व्याप्तसर्वावयवाः गाः,*
सा०-१०।६२।७

**अष्टम**

*१. अष्टर्त्विक्संबन्धि,*
सा०-२।५।२

*२. अष्टसंख्यापूरकम्,*
सा०-१०।११४।९

**अष्टापदी**

*१. अष्टापदी दिग्भिश्चावान्तर-दिग्भिश्च,*
वे०-१।१६४।४१ (या०स्क०- ११। ४०) अष्टभिर्दिग्भिर्विदिग्भिः साष्टपदी,
सा०-८।७६।१२
*२. गर्भिणीभिः,*
वे०सा०-२।७।५
*३. विदिगपेक्षया अष्टपादोपेता अष्टा-धिष्ठाना,*
सा०-१।१६४।४१

**अष्टाबन्धुर**

*१. वन्धुरं सारथिनिवासस्थानम्। अष्ट-संख्याकवन्धुरोपेतम्,*
सा०-१०।५३।७
*२. आदित्यरथम्,*
वे०-१०।५३।७

**अष्ठीवत्**

*जानुनी,*
सा०-७।५०।२, १०।१६३।४

**√अस् (१)**

*१. भवति,*
उ०वे०सा०- १०।१०।११, १८।१२, २७।१, ४४।७, उ०सा०- ५।५७।२, ६०।६, १०।२२।१२, स्क०- १।२७।८, स्क०वे०- १।५।७, स्क०वे०सा०मु०- १।८।९, स्क०सा०मु०- १।२४।१५, वे०- १।१५।२, २।१४।११, २३।१४, ३।३।७, ६।८, ५४।१६, ४।१।१८, १६।२०, ३४।६, ५८।१, ५।२।१०, १२।४, ३३।४, ७४।६, ६।२३।५, ७।३।८, २२।२ ८।१।१९, ३१, १००।४, १०।७।४, ८२।५, ११५।४, ७ वे०सा०-३।२३।३, ४।६।१, ६।१५।१९, १९।१३, ९।६५।४, ८९।६, १०।९४।११, १०६।२, वे०सा०मु०- १।१७।२, ५।९।४, ७३।१, वे०मु०- १।५७।२, सा०- २।९।४, २३।९, २९।४, ३।३०।१८, ५६।८, ४।२।१०, ८।५, २३।८, ३७।२, ५।४।८, ६।२।७, ४४।१२, ५०।७, ७।३।२, ४।१२, ३२।२४, ४३।४, ६०।७, ९७।४, १००।६, ८।२।७, ४।१, ७।१२, १०।१, ५, १६।६, १९।८, २०।१७, ३१।१८, ४३।३०, १००।३, ९।२।१०, ६३।३, ७३।४, ८६।३८, १०।१।२, ४, १०।९।१, सा०मु०- ५।१३।४, ३०।१५
*२. विद्यते,*
उ०-८।७१।६, वे०- ४।२०।७, ३०।१, ५।३।५, ७।६०।७, ८।१००।३, वे०सा०-८।१४।४, १०२।१९, सा०- २।२७।६, ३३।१०, ६।७४।३, ७।२२।२, ८।१। ९, ३१
*३. वर्तते,*
सा०-१।२२।४, ८।१०।१, ५, मु०-५। ७४।६
*४. प्रादुर्भवन्तु,*
सा०- ५।२।१०, वे०-८।१०।५
*५. शोधयेत्,*
सा०मु०-१।१५।२
*६. परिभवसि,*
वे०-३।३।१०
*७. रक्षन्तु,*
वे०सा०-९।७०।३
*८. जनयामास,*
सा०-१०।१७।२

सत्

*१. वर्तमानम्,*
वे०-२।१३।१२, ५।८।३, सा०-१।१७३।७, ४।१।१५, ५।७।४, ८।११।४, ७३।१,१८
*२. नित्यं वर्तमानस्य,*
मु०-१।३६।३
*३. सर्वत्र वर्तमानम्,*
सा०मु०-१।७२।२
*४. अदृश्यतया वर्तमानम्,*
सा०-३।९।२
*५. सर्वदा वर्तमानम्,*
सा०- ५।८।३
*६. सर्वेषां हृदि वर्तमाना एव,*
सा०-६।६६।४
*७. स्तोत्रकरणार्थं वर्तमानान् स्तोतॄन्,*
सा०- ८।२३।२६
*८. अस्मत्तो दूरे वर्तमानस्य,*
सा०-९।१९।७
*९. भवन्,*
स्क०- १।७२।२, वे०-४।१५।१, ८।८।२३ १०।२७।४, वे०सा०- ८।१०१।११, १०।६७।१०, सा०-६।४७।२०, १०।१७१।४
*१०. विद्यमानम्,*
वे०-६।६७।१, ८।७३।१,१८, ९।१९।७, वे०सा०-६।१८।४, सा०-६।१७।५, ८।११।४, ४३।१४, ९।९।५, ६१।१०, ८६।६
*११. विद्यमानान् प्रादुर्भूतान्,*
वे०-७।१०४।२१
*१२. समीपे विद्यमानं क्षीरम्,*
सा०-४।५।१०
*१३. अभिभवति,*
उ०सा०-१०।२७।४, वे०सा०-२।४१।१०
*१४. समीपे सीदन्ति,*
वे०-४।५।१०, सा०-४।५।१० (समीपे विद्यमानं क्षीरम्)
*१५. आविर्भवति,*
उ०सा०-१०।५।७, सा०-८।८।२३ व्याकृतम्
*१६. साधुनाम्,*
सा०-२।१।३
*१७. सताम्,*
वे०-२।१।३
*१८. सत्सु साधुरवितथस्वभावो वा,*
सा०-८।१६।८
*१९. आसीनाय,*
वे०-५।७।४।
*२०. तिष्ठते यजमानाय,*
सा०-१।१२४।१२
*२१. वसते,*
वे०-१।१२४।१२
*२२. सर्वतः,*
स्क०-१।३६।३
*२३. पुन्नाम्नो नरकात् त्रायकः सन्,*
सा०- १।६९।१, २
*२४. इदानीं त्वत्परिचर्यां कुर्वन्तः,*
सा०-५।१२।५
*२५. सफलसाधनत्वाद्धविरपि सत्,*
सा०-५।४४।३
*२६. प्रशस्तवचनोऽयम् सच्छब्दः। प्रशस्ता भूमिः पृथिवी,*
स्क०-६।४७।२०। वे०-७।३२।२४ (प्रशस्तस्य वशिष्ठस्य), १०।५३।१० (प्रशस्ताः)
*२७. सत्यम्,*
वे०सा०-७।१०४।१२
*२८. अग्निः,*
वे०सा०-१०।४।४

२९. *नामरूपविशिष्टं देवादिकम्,*
सा०-१०।७२।२
३०. *व्यक्तं महापुरुषो हिरण्यगर्भाख्यः यः परत्र उत्तानपादिति वक्ष्यमाणः,*
उ०-१०।७२।२
३१. *भूष्णवे,*
सा०-१०।११५।६
३२. *सदात्मवत् सत्त्वेन निर्वाच्यम्,*
सा०-१०।१२९।१
३३. *सच्छब्देन अन्तरिक्षमुक्तम्। 'सद् इव अन्तरक्षिम्'। इति ब्राह्मणम्,*
वे०-१०।१२९।१
३४. *सत्त्वेन इदानीमनुभूयमानस्य सर्वस्य जगतः,*
सा०-१०।१२९।४

**सती**

१. *वर्तमाना,*
वे०-३।३१।५, ५।२९।५, ९।८७।८
२. *वर्तमानाः पणिभिरपहृताः,*
सा०-९।८७।८
३. *भवती,*
वे०-८।५।१, सा०-८।६।८, सा०मु०-५।२९।५,
४. *इह समीपे विद्यमाना,*
सा०-८।५।१
५. *निगूढाः सतीर्गाः,*
सा०-३।३१।५
६. *कल्याणीर्भवन्तीर्गाः,*
सा०-१०।१६९।४
७. *दुहिता,*
सा०-२।१७।७
८. *प्रशस्तवचनोऽयम् सच्छब्दः। प्रशस्ता भूमिः पृथिवी,*
स्क०-६।४७।२०

**√अस् (२)**

१. *अस्यति,*
वे०- ७।१०४।२५, १०।६१।८
२. *क्षिपति,*
स्क०वे०-१।११४।४,वे०सा०- १।१७२।२, सा०-२।२४।८, ७।१०४।२५, १०।६१।८
३. *प्रेरयति,*
सा०मु०-१।११४।४, वे० २।२४।८
४. *मुखादुद्गिरतु,*
सा०-३।५३।२२
५. *विसृजति,*
वे०-३।५३।२२

**असत्**

१. *असत्यम्,*
वे०-७।१०४।१२, १३, वे०सा०-७।१०४।८, सा०-७।१०४।१२, १३, (उक्तविलक्षणमसत्यम्)
२. *अनृतेन,*
वे०-४।५।१४
३. *दुःखेन,*
सा०-४।५।१४
४. *अकल्याणम्,*
वे०-६।२४।५
५. *अशुभमशनिपातनादिकम्,*
सा०-६।२४।५
६. *अव्याकृतम्,*
उ०सा०-१०।५।७
७. *सद्विलक्षणेऽव्याकृते कारणे,*
सा०-१०।१२९।४

**असन**

१. *इषवोऽस्यन्तेऽस्मिन्निति असनः संग्रामः,*
सा०मु०-१।११२।२१

*२. असुरान् हन्तुमिषूणां क्षेपणकाले,*
स्क०-१।११२।२१
*३. इषुक्षेपणकाले,*
वे०-१।११२।२१
*४. शत्रोरुपरि क्षेपणाय,*
सा०-१।१३०।४
*५. निरसनाय,*
वे०-१।१३०।४

**असिष्यत्**

*१. क्षेप्स्यन्,*
वे०-६।३।५
*२. ज्वालां प्रक्षेप्स्यन्,*
सा०मु०-६।३।५

**अस्तृ**

*१. क्षेप्ता,*
उ०-१०।४२।१, १३३।३, वे०-१।६१।७, ६४।१०, ९।७७।२
*२. इषूणां क्षेप्ता धानुष्कः,*
वे०-६।३।५ (शरान् क्षेप्स्यन्), सा०-२।४२।२ (शराणां क्षेप्ता धन्वी) ४।२७।३ (शराणां क्षेप्ता), ६।३।५ (बाणादेः क्षेप्ता), ९।७७।२ (शरक्षेप्तुः), १०।४२।१ (क्षेप्ता धानुष्कः), सा०मु०-१।७०।६,
*३. इषूणां क्षेप्तृंस्तदनुचरान् गन्धर्वान्,*
सा०-१०।६४।८
*४. शत्रुवधाय आयुधानां क्षेप्तॄन् अन्यांश्च देवान्,*
उ०-१०।६४।८
*५. स्तृणाति सामर्थ्याद् हिंसार्थः। अहिंसितैः,*
स्क०-१।८।४
*६. क्षेपकः,*
सा० मु०-१।६१।७
*७. शत्रूणां निरासितारः,*
सा०मु०-१।६४।१०
*८. योद्धा,*
वे०-१०।४२।१
*९. प्रेरयिता,*
वे०-२।४२।२
*१०. वेद्धा,*
वे०-४।२७।३, ६।३।५
*११. वीरः क्षेप्तेव,*
सा०-६।६४।३

**अस्यत्**

*१. क्षिपन्,*
वे०-१०।१६८।१, सा०-१०।४२।१
*२. गृहीत्वा सर्वत्र विक्षिपन्,*
सा०-१०।१६८।१

**असंयत्त**

*१. विनैव क्लेशेनेत्यर्थः,*
स्क०-१।८३।३
*२. शत्रुभिः सह युद्धार्थमनभिगतः सन्,*
सा० मु०-१।८३।३

**असक्रा**

*१. असंक्रमणीम्, यावज्जीवम् अनपायिनीमित्यर्थः। अथवा समानेषु न क्रामतीत्यसक्रा... समेष्वक्रान्तम् अस्मत्सजातैर प्राप्तपूर्वामित्यर्थः,*
स्क०-६।६३।८
*२. असङ्क्रमणम्,*
वे०-६।६३।८
*३. असंक्रमणीम्,*
सा०-६।६३।८ (यास्क०-६।२९)

**असचद्विष्**

*१. असमवेतशत्रवः,*
वे०-८।२०।२४

२. *असक्तशत्रवः शत्रुरहिताः,*
सा०-८।२०।२४

**असजात्या**

१. *असमानजातीया,*
उ०-१०।३९।६
२. *अश्रद्धेया,*
वे०-१०।३९।६
३. *अश्रद्धेया चाभिशस्तिः,*
सा०-१०।३९।६

**असत्य**

१. *वाचिकमनृतमसत्यम्,*
वे०-४।५।५
२. *वाचिकसत्यरहिता मनसा वाचाग्नि मभजमानाः,*
सा०-४।५।५

**असना**

१. *गच्छन्तीम्,*
सा०-१।१४८।४
२. *निरसनं वायुः,*
वे०-१।१४८।४।
३. *असनं चलनशीलं प्रदानशील-मन्नादिकम्,*
सा०-१।१५५।२
४. *तेजः,*
वे०-१।१५५।२
५. *प्रक्षेप्तुम्,*
सा०-१०।९५।३

**असंदित**

१. *दामभिरसम्बद्धः,*
वे०-४।४।२
२. *परैरनिरुद्धः,*
सा०-४।४।२

**असंदिन**

१. *अबद्धम्,*
सा०-८।१०२।१४
२. *आनन्दिनम्,*
वे०-८।१०२।१४

**असपत्न, त्ना**

१. *सपत्नीरहिता,*
वे०-१०।१५९।४, ५
२. *अशत्रुका,*
सा०-१०।१५९।५
३. *शत्रुरहितः,*
सा०-१०।१७४।५
४. *अभियोक्तृसपत्नवर्जितः,*
वे०-१०।१७४।५

**असम, मा**

१. *विषमः,*
सा०-६।६७।१
२. *विषमाः नानाप्रकाराः,*
सा०-२।१३।७
३. *असदृशः,*
स्क०-६।३६।४, स्क०वे०- ६।६७।१
४. *नानाविधः,*
वे०-२।१३।७
५. *न केनचित् समं सर्वाधिकमित्यर्थः*
सा०- मु. १।५४।८
६. *अतुल्यमन्यैर्मनुष्यैः,*
स्क०-१।५४।८
७. *अनुपमः सर्वोत्कृष्टः,*
सा०-६।३६।४
८. *असाधारणम्,*
उ०सा०-१०।४७।८
९. *अतुल्यः,*
उ०सा०-१०।७१।७

१०. *अतिरिक्तमत्यन्तम्,*
वे० - १०।८९।३, सा० - १०।८९।३
(अत्यन्तमतिरिक्तम् महदित्यर्थः)

**असमन, ना**

१. *असङ्ग्रामयोग्ये,*
स्क०- ६।४६।१३
२. *असमाने,*
वे०- ६।४६।१३
३. *विषमे,*
सा०- ६।४६।१३
४. *परस्परमसमेताः,*
सा०-७।५।३
५. *त्यक्तसङ्गमाः,*
वे०-७।५।३
६. *असमानमनस्काः। काश्चन प्राङ्-मुख्यो गच्छन्ति काश्चन प्रत्यङ्मुख्यः इति विविधमनस्काः,*
सा०-१।१४०।४
७. *भिन्नवर्णाः,*
सा०-१।१४०।४
८. *नानाविधरूपाः,*
वे०-१।१४०।४

**असमष्टकाव्य**

१. *अव्याप्तकर्मा,*
वे०-९।७६।४
२. *अन्यैरयाप्तकर्माः,*
सा०-२।२१।४
३. *अव्याप्तकर्मा सोमः,*
सा०-९।७६।४।
४. *असमाप्तस्तोत्रः,*
वे०-२।२१।४

**असमाति**

*राजानम्,*
सा०-१०।६०।२

**असमात्योजस्**

१. *असमाति असमानम् अनुपमम् उत्कृष्टतरमोजो बलं यस्य तादृशः सन्। ... अन्येनासमबलः,*
स्क०-६।२९।६
२. *समातिबलो यो भवति स समात्योजाः, अतादृशः,*
वे०-६।२९।६

**असंमृष्ट**

*अबाधितः,*
सा०मु०-५।११।३

**असश्चन्ती**

१. *अस्मादन्यत्र संगतिमकुर्वाणा,*
सा०-३।५७।६
२. *अनवरतं प्रवृत्ता,*
वे०- ३।५७।६।
३. *असज्यमाने व्युदस्यन्त्यौ वा,*
सा०-६।७०।२
४. *असङ्गच्छमाने असज्जमाने परस्परेण असम्मिश्रीभवन्त्यौ अविक्षिप्न्त्यौ आश्रितान् वा,*
स्क०-६।७०।२
५. *परस्परमसङ्गते,*
वे०-६।७०।२
६. *अगमनशीलम्,*
सा०-८।३१।४

**असश्चत्**

१. *अन्यत्रानासक्ताः स्तोतारः,*
सा० मु०-१।११२।२
२. *असङ्गच्छमानाः। असंयुक्ता इत्यर्थः,*
स्क०-१।११२।२
३. *असक्तारः,*
वे०-१।११२।२, ९।७४।६

४. *असज्यमाना अनिरुद्धाः सत्यः,*
सा०-२।२५।४, ७।६७।९ (कुत्राप्य-सज्यमानौ)
५. *असङ्गताः,*
वे०-९।८६।२७
६. *सङ्गवर्जिताः,*
वे०-२।२५।४
७. *परस्परमसक्ताः,*
सा०-९।७४।६
८. *परस्परमसंगताः,*
सा०-९।८६।२७
९. *आसंगवर्जितौ,*
सा०-७।६७।९

**असश्चुषी**

*अप्रतिबन्धा,*
वे०सा०-९।८६।१८

**अससत्**

१. *अस्वपन्तः,*
वे०-१।१४३।३
२. *स्वव्यापारेषु अस्वपन्तोऽविरताः,*
सा०-१।१४३।३

**असामि**

१. *अनल्पमधिकम्,*
सा०-६।१९।२
२. *अन्यूनः,*
वे०-६।१९।२
३. *आङ्मर्यादायाम्। आ समाप्तेः। अनन्तगुणः इत्यर्थः,*
सा०-१०।२२।३
४. *असाधारणं कृत्स्नम्,*
वे०-१०।९६।५, सा०- १०।९६।५ (असाधारणमसमं कृत्स्नम्)
५. *सम्पूर्णम् ...सामि अर्धं न सामि असामि,*
सा०-१।३९।९, १०
६. *सम्पूर्णम्,*
मु०-१।३९।९, १०

**असि**

१. *अस्याद्यायुधम्,*
उ०-१०।७९।६
२. *शस्त्रम्,*
सा०-१०।८९।८
३. *स्वधितिः,*
सा०-१०।७९।६

**असिक्नी**

१. *रात्रिः,*
वे०सा०-१०।३।१, सा०-४।१७।१५
२. *रात्रिवत्कृष्णरूपाम्,*
सा०-९।७३।५
३. *कृष्णा,*
वे०-९।७३।५
४. *असितवर्णा,*
वे०सा०-७।५।३
५. *अवयवभूता,*
सा०-१०।७५।५

**असित**

१. *कृष्णवर्णम्,*
सा०-४।१३।४, ५१९
२. *तमोलक्षणम्,*
वे०-४।१३।४, ४।५१।९ (तमः)
३. *स्वकीयेदीप्तेः सूर्यप्रवेशेन स्वयं कृष्णो भूत्वा,*
सा०मु०-१।४६।१०
४. *षिञ् बन्धने इत्यस्यैतद्रूपम्,*
स्क०-१।४६।१०

५. *अबद्धः,*
वे०-१।४६।१०

**असिन्व, न्वा**

१. *सपत्नानवक्षेप्तारम्,*
सा०-५।३२।८
२. *अबन्धनम्,*
वे०-५।३२।८
३. *भेदनरहितम्,*
सा०-१०।८९।१२
४. *बन्धनरहिता,*
वे०-१०।८९।१२

**असिन्वत्**

१. *अखादन्,*
वे०-२।१३।४
२. *सेतुबन्धादिकं कर्म कुर्वन् लोकः,*
सा०-२।१३।४
३. *अप्रतिबध्नन्नग्निः,*
सा०-७।३९।६
४. *अबध्नन्,*
वे०-७।३९।६, ८।४५।३८, सा०-८।४५।३८ (न बध्नन्)
५. *दन्तैरसंखादन्,*
सा०-१०।७९।२
६. *असङ्खादन् उच्चैरचर्वयन्,*
उ०-१०।७९।२
७. *असंख्यादन्त्यौ,*
उ०सा०- १०।७९।१। वे०- १०।७९।१ (असंखादन्त्यौ भक्षयन्त्यौ)

**असिर**

१. *उत्क्षेपकेण तेजसा,*
वे०-९।७६।४
२. *क्षेपकेण रश्मिना,*
सा०-९।७६।४

**असु**

१. *प्राणः,*
स्क०वे०- १।११३।१६, (यास्क०- ३।८) वे०सा०-१।१४०।८, १८२।३, १०।१५।१, सा०-२।२२।४
२. *प्राणं तदुपलक्षितं सूक्ष्मशरीरम्,*
सा०-१।१६४।४
३. *आत्मीयं ज्वालालक्षणं प्राणम्,*
सा०-१०।१२।१
४. *प्राणं ज्वालालक्षणं सर्वार्थदर्शन-लक्षणम्,*
उ०-१०।१२।१
५. *समीचीनं प्राणम्,*
सा०-१०।१४।१२
६. *प्राणभूतः,*
सा०-१०।१२१।७
७. *शरीरस्य प्रेरयिता,*
सा०मु०-१।११३।१६
८. *असितारम्,*
वे०-२।२२।४
९. *चालकः,*
वे०-१।१६४।४
१०. *बलम्,*
वे०-१०।१२।१

**असुतृप्**

१. *परकीयान् प्राणान् स्वीकृत्य तैस्तृप्यन्तौ,*
सा०-१०।१४।१२
२. *असुभिः तृप्तौ,*
वे०-१०।१४।१२, ८७।१४
३. *केनाप्युपायेन असून्प्राणास्तृप्यन्तः। उदरंभरा इत्यर्थः,*
सा०-१०।८२।७

*४. असूनां प्राणानां चक्षुरादीन् अबादिना तर्पयितारश्चेत्यर्थ,*
उ०-१०।८२।७
*५. आत्मीयानां तर्पयितारः,*
वे०-१०।८२।७
*६. मनुष्याणामसुभिस्तृप्ताः,*
सा०-१०।८७।१४

**असु,नीति**

*१. असुरिति प्रज्ञा। तया परिसमाप्तिं नीयते इत्यसुनीतिरत्र स्तुतिरुच्यते,*
उ०-१०।१२।४
*२. असुः प्रज्ञा। तया नीयत इति असुनीतिः स्तुतिः,*
सा०-१०।१२।४

**असुत**

*१. नाभिषुतः,*
सा०-७।२६।१
*२. वल्ल्याकारे वर्तमानम्,*
सा०-८।६४।३

**असुन्वत्**

*१. अयजमानः,*
वे०-१।१७६।४, सा०मु०-५।३४।६
*२. सोमाभिषवमकुर्वतः,*
स्क०- १।१०१।४, सा०- ४।२५।७ (सोमाभिषवमकुर्वता अयजमानेन सह) सा०- १।१७६।४। (सोमाभिषवम-कुर्वाणम्। त्वामजयन्तमित्यर्थः)
*३. सुन्वतां यागानुष्ठानतॄणां विरोधिनः,*
सा०मु०-१।१०१।४

**असुन्वा**

*१. अभिषववर्जितानाम्,*
वे०-८।१४।१५
*२. सोमाभिषवहीनाम्,*
सा०-८।१४।१५

**असुर**

*१. बलवान्,*
उ०वे०सा०- ५।१२।१, वे०-१।३५।१०, (बली) १३१।१, १७४।१, २।१।६, २७।१०, २८।७, ३।३८।४, ५।४२।१, ७।५६।२४, ८।९०।६, १०।१०।२, ११।६, ३१।६, वे०सा०-१।१५१।४, ३।५३।७, ७।३६।२, ६५।२, ९।९९।१, १०।५६।६, ९३।१४, ९९।१२, सा०-४।२।५, ५।२७।१, ७।२।३, ६।१, ३०।३, ८।२५।४, ४२।१, ९७।१, (बलवद्-भ्योराक्षसेभ्यः), ९।७३।१, ७४।७, १०।९६।११, सा०मु०- ५।१५।१
*२. उद्गूर्णबलेषु,*
सा०-१०।१५१।३
*३. प्रकृष्टासुम्। बलवन्तमित्यर्थः,*
सा०मु०-५।४२।११
*४. असुर्बलम्। तद्वतः,*
सा०-४।५३।१
*५. बलवन् प्राणवन्,*
सा०-८।९०।६
*६. बलप्रदः,*
सा०-३।३।४
*७. प्राज्ञः,*
वे०-५।१५।१, ५१।११, ८३।६, सा०-९।७४।७
*८. प्राणवान्,*
उ०- १०।६७।२, ७४।२, उ०सा०-१०। १०।२, ११।६, स्क०- १।२४।४ (असवः प्राणाः तद्वन्) सा०-१।३५।१० (प्राणप्रदाता) १०।९६।११, (आसुः प्राणः। तद्वन्। मत्वर्थीयो रः। तादृशेन्द्रः) (प्राणदः)

*९. प्राणदाता,*
सा०- ५।४१।३, ४२।११, ९।७३।१, (सर्वेषां प्रीणनात् प्राणदाता), सा०मु०- १।३५।७, (प्राणदः) ३५।१० (प्राण प्रदाता), सा०मु०-५।४२।१

*१०. प्रज्ञावान्,*
उ०- १०।१०।२, ११।६ ३१।६, उ०वे०सा०- १०।६७।२, उ०सा०- १०।१०।२, ११।६, स्क०-१।३५।१०, स्क०वे०-१।३५।७, वे०-३।३।४, ४।२।५, ५३।१, ७।६।१, ३०।३, १०।९६।११, सा०-७।५६।२४, ९।७४।७

*११. प्राणापहर्त्रे,*
सा०मु०-५।४१।३

*१२. क्षेपकः,*
वे०-५।४२।११, (क्षेप्तारम्), ८।१९।२३, सा०-२।२७।१०, ८।२०।१७, २७।२०, १०।१२४।३, १३२।४, १५७।४

*१३. अनिष्टक्षेपणशीलः,*
सा०मु०-१।२४।१४

*१४. हविषां प्रक्षेपकैः ऋत्विग्भिः,*
सा०मु०-१।१०८।६

*१५. अस्यति क्षिपति सर्वमित्यसुरः कालात्मा संवत्सरः,*
सा०-३।५६।८

*१६. प्रेरकः,*
वे०सा०-१०।७४।२, सा०-३।२९।१४, ८।२५।४ (सर्वान्तर्यामितया प्रेरकौ)

*१७. अस्यति प्रेरयति सर्वानन्तर्यामितयेत्यसुरः,*
सा०-३।३८।४

*१८. निरसिता,*
वे०-५।२७।१ (निरसिता शत्रूणां), सा०-१।१२२।१ (निरसितव्यानामसुराणां निरसितुः), १२६।२, (धनानां निरसितुः दानशीलस्य), १३१।१ (निरसनशीलाः), १७४।१ (शत्रूणां निरसितः), २।१।६, (शत्रूणां निरसिता), २८।७ (पापकृतां निरसिता), ५।८३।६ (उदकानां निरसिता) सा०मु०-१।५४।३, ६४।२ (शत्रूणां निरसिता), ५।४९।२ (शत्रूणां निरसितुः) ५१।११ (शत्रूणां निरसिता), ६३।३ (उदकनिरसितुः), ६३।७ (मेघानां निरसितुः)

*१९. मेघः,*
स्क०-१।५४।३, वे०सा०-१०।९२।६

*२०. असवः प्राणाः। तेन आपो लक्ष्यन्ते... तान् राति ददाति इति असुरः,*
सा०-१।५४।३

*२१. असवः प्राणाः। तान् ददाति। मनुष्येभ्यः स्वोदयेन प्रयच्छतीत्यसुरः,*
सा०-१०।१३२।४

*२२. प्रकृष्टासुम् बलवन्तमित्यर्थः,*
सा०मु०-५।४२।११

*२३. दीप्तः,*
वे०-१०।१३२।४

*२४. पर्जन्यस्य,*
उ०वे०सा०-५।६३।७

*२५. सत्यप्रज्ञौ,*
वे०-८।२५।४

*२६. देववर्जिताः,*
वे०-८।९६।९

*२७. वृत्रस्य,*
वे०-२।३०।४

*२८. असनकुशलस्य सर्वोपाधिविहीनस्य परब्रह्मणः संबन्धिन्या,*
सा०- १०।१७७।१

२९. त्वष्टुः सम्बन्धिनम्। तेन निर्मित-मित्यर्थः,
सा०मु०-१।११०।३
३०. त्वष्टा,
स्क०-१।११०।३
३१. सोमस्य,
वे०-१।११०।३

**आसुर**

१. कर्मविघ्नकारिणामसुराणां हन्ता,
सा०-३।२९।११
२. असुरहन्तुः,
वे० मु०-५।८५।५
३. असुरसंबन्धिनः। असुराणामस्य च वध्यघातकभावः संबन्धः। असुर-हन्तुरित्यर्थः,
सा०-५।८५।५
४. असुरो मेघः। प्राणदानात् तत्संबन्धिनः।
सा०-५।८५।५
५. असुरपुत्रः,
सा०-१०।१३१।४

**असुरत्व**

१. अस्यति क्षिपति सर्वानित्यसुरः प्रबलः। तस्य भावोऽसुरत्वं प्राबल्यम्। महदैश्वर्यम्,
सा०-३।५५।१
२. प्राबल्यम्,
वे०-३।५५।१
३. प्रकृष्टबलवत्वम्,
सा०-१०।५५।४
४. बलकृतम्,
वे०-१०।५५।४
५. बलेन युक्तः,
वे०सा०-१०।९९।२

**असु,हन्**

असुराणां हन्तुः,
वे०सा०-६।२२।४

**असुर्य, र्या**

१. असुराणां बलम्,
सा०-३।३८।७, ६।२०।८
२. असुरत्वं बलम्,
सा०-६।२०।२
३. महद् बलम्,
वे०-६।२०।२
४. बलम्,
वे०-२।३५।२। सा०-७।५।६, २१।७,
५. असुराणां हन्तृबलम्,
वे०-७।५।६
६. असुरघ्नं बलम्,
सा०मु०-५।१०।२
७. असुर्यं बलम्,
सा०-७।२२।५
८. असुरः शत्रून् क्षेप्ता। तस्य स्वभूतस्य बलस्य,
सा०-२।३५।२
९. असुराणां हन्ता,
वे०-१।१६७।५, ४।१६।२।, ७।२१।७।, १०।१०५।११ वे०सा०-२।२३।२, ८।१०१।१२
१०. असुराणां हिंसकाय तुभ्यम्,
सा०-४।१६।२,
११. असुरहघ्नं बलम्,
सा०मु०-५।१०।२
१२. असुराः क्षेप्तारो मरुतः,
सा०-१।१६७।५
१३. शत्रूणां क्षेप्ता,
सा०-४।४।१

१४. *असुराणां स्वभूतम्,*
वे०-३।३८।७
१५. *असुराणां हन्तुः जानन्,*
वे०-७।२२।५
१६. *असुराणां बाधकम्,*
वे०सा०-९।७१।२
१७. *असुरसंबन्धिनो भयात्,*
सा०-१।१३४।५
१८. *असुरपक्षीयात्,*
वे०-१।१३४।५

**असुष्वि**

१. *अनभिषोतॄनयजमानान्,*
सा०-६।४४।११
२. *सोमाभिषवस्याऽकर्तॄन्,*
स्क०-६।४४।११
३. *अयजमानान्,*
वे०-६।४४।११
४. *असुन्वतोऽयजमानस्य,*
सा०-४।२५।६
५. *अनभिषुतसोमान् यजमानान्,*
सा०-४।२४।५

**असू**

१. *निवृत्तप्रसवाम्,*
वे०-१।११२।३
२. *अप्रसूतां निवृत्तप्रसवाम्,*
वे०सा०-१०।६१।१७
३. *प्रसवासमर्थाम्,*
सा०मु०-१।११२।३

**असूयत्**

*सुखेन जीवन्तं मां मृत्युसमीपं प्रेहीत्युक्त, वानिति मानसेनोपतापेन युक्तः सन्,*
सा०- १०।१३५।२

**असूर**

१. *प्रज्ञारहिते,*
वे०-८।१०।४
२. *स्तोतृरहितेऽपि देशे,*
सा०- ८।१०।४

**असूर्त**

१. *असुसमीरता असुना प्राणेन परमसूक्ष्मेण वायुना हिरण्यगर्भेण विश्वकर्माख्येन प्रेरिताः,*
उ०-१०।८२।४
२. *सरणवर्जिते,*
वे०सा०-१०।८२।४

**असृज्**

१. *अविसृजन्,*
वे०-१।१६४।४
२. *शोणितम्। एतत्सप्तधातूपलक्षकम्। यद्यपि शरीरं पञ्चभूतात्मकं तथापि भूतद्वय, प्रत्यक्षत्वात् तदपेक्षयोक्तम्,*
सा०-१।१६४।४

**असेन्य**

१. *असनीयानि दासपुत्रैः,*
वे०-१०।१०८।६
२. *सेनार्हाणि न भवन्ति,*
सा०-१०।१०८।६

**अस्कम्भन**

१. *अन्तरिक्षे,*
वे०-१०।१४९।१
२. *पतनप्रतिबन्धकमालम्बनं स्कम्भनम्। तद्रहिते स्थले,*
सा०-१०।१४९।१

**अस्कृधोयु**

१. *कृध्विति ह्रस्वनाम। निकृतं भवति,*
स्क०-६।६७।११ (या०, ६।३)

२. *अविच्छन्नम्,*
सा०-६।२२।३, ६७।११
३. *न कृधु अस्कृधु दीर्घम्, तदायुर्यस्य तद् अस्कृधोयु। दीर्घकालावस्थायि,*
स्क०-६।६७।११
४. *अनल्पागमनम्,*
वे०-६।६७।११

**अस्त**

१. *गृहभूतम्,*
वे०-५।६।१
२. *शरीरम्,*
वे०-१०।१४।८
३. *गृहम्,*
उ०वे०सा०-१०।३४।१०, स्क० वे० सा०-६।४९।१२, स्क०वे०सा०मु०-१।६६।५, वे०-३।५३।४, वे०सा०-४।१६।१०, ३४।५, ७।१२, ३७।४, ६, ८।९१।१, ९।६६।१२, १०।१११।१० वे०सा०मु०-५।३०।१३। सा०-१०।१४।८,
४. *अस्यन्ते क्षिप्यन्ते पदार्था अत्रेत्यस्तं गृहम्,*
सा०-३।५३।४
५. *यज्ञगृहम्,*
वे०सा०-९।९७।८
६. *स्वधामस्थानम्,*
सा०-१।१३०।१

**अस्ततति**

१. *निरस्तधनम् दत्तधनम्,*
वे०-५।७।६
२. *अस्ते गृहे निवासकर्तारम्,*
सा०-५।७।६

**अस्तमीक**

१. *अन्तिके,*
वे०-१।१२९।९
२. *अत्यन्तान्तिके देवयजनदेशे,*
सा०-१।१२९।९

**अस्तुत, ता**

१. *सामर्थ्यान्मत्तोऽन्येन केनचिद्, स्तुतपूर्व इत्यर्थः,*
स्क०-५।६१।८
२. *बहुधा स्तुतोऽपि गुणस्याति, बाहुल्यादस्तुत एवेति ब्रुवे,*
सा०मु०-५।६१।८
३. *अस्तुतः,*
वे०-५।६१।८, ६७।५
४. *सर्वैरस्तूयमानः कोऽस्ति। उभावपि स्तुत्यावित्यर्थः,*
सा०मु०-५।६७।५

**अस्तृत**

१. *अहिंसितः,*
उ०सा०वे०-१०।४८।११, स्क०वे० सा०मु०-१।४१।६, वे०सा०- ६।१६। २०, ८।१।११, ९३।९, ९।९।५, २७।४, वे०सा०मु०-१।४।४, सा०- ८।९३।१५
२. *स्तृञ् आच्छादने हिंसायां वा। अनाच्छादितं सर्वप्रकाशमहिंसितं वा,*
स्क०-१।४।४

**अस्तृत-यज्वन्**

*अहिंसितयजमानस्य,*
वे०सा०-८।४३।१

**आस्त्रबुध्न**

*अस्त्रबुध्नो नाम कश्चित् तस्य पुत्राय,*
सा०-१०।१७१।३

**अस्थन्**

१. *अस्थिभिः,*
स्क०वे०-१।८४।१३
२. *अश्वशिरः संबन्धिभिरस्थिभिः,*
सा०मु०-१।८४।१३

अस्थनवत्

*अस्थिमन्तं सशरीरम्। उपलक्षणमेतत्। कार्यभावामापन्नमित्यर्थः,*

सा०-१।१६४।४

अस्थूरि

*१. एकाश्वयुक्तः शकटः स्थूरि, रित्युच्यते। तद्विपरीतो बहुभिरश्वैरूपेतः शकटोऽस्थूरिः। तेन च सम्पूर्णता लक्ष्यते। अस्थूरीणि पुत्रपशुधनादिभिः सम्पूर्णानि,*

सा०-६।१५।१९

*२. अश्वैनैकेन युक्तो रथः स्थूरिरुच्यते। बहुभिर्युक्तोऽस्थूरिः। बहुभिः प्रजा-पशुभिर्युक्तानि गृहैश्वर्याण्यस्थूरीण्युच्यन्ते,*

वे०-६।१५।१९

अस्थेयस्

*१. आवृश्चन्ति स्थेयांसः,*

वे०- १०।१५९।५

*२. अस्थिरतराणां शत्रूणां यथा धनमप्रयत्नेन वृश्च्यते तथेत्यर्थः,*

सा०- १०।१५९।५

अस्नातृ

*१. अनभिषिक्तौ पितृशापात्,*

वे०- ४।३०।१७

*२. अलब्धस्नानान्,*

वे०- २।१५।५

*३. अस्नातारौ ययातिशापादनभिषिक्तौ,*

सा०-४।३०।१७

*४. स्नातुमशक्तान् तरणसमर्थान्नृषीन्,*

सा०-२।१५।५

अस्पन्दमान

*एकत्रावस्थितः सन्,*

सा०-४।३।१०

अपूप

*पुरोडाशम्,*

उ०वे०सा०-१०।४५।९, वे०सा०-३।५२।७

अस्पृत

*अहिंसितः,*

वे०सा०-९।३।८

अस्मद्

*१. मदीयम्,*

वे०सा०मु०-१।१०।९, ३१।११

*२. आस्मकीनैः,*

वे०सा०-२।३०।१०

अस्मयु

*१. अस्मत्कामः,*

स्क०वे०-६।४८।२, वे०-१।१३१।७, १३५।५, २।२३।८, ३।४१।७, ५।७४।८, ७।७४।४, वे०सा०-९।२।५, ९३।१४, १०।९३।११,

*२. अस्मान् कामयमानः,*

सा०-६।४८।२, ७।७४।४, १०।९३।११, सा०मु०-५।७४।८,

*३. अस्मान् त्वद्भक्तान् कामयमानः,*

सा०-१।१३१।७

*४. हविष्प्रदानस्मान् कामयमानः,*

सा०-२।२३।८

*५. विश्वमनसं मां कामयमानौ,*

सा०-८।२६।१४

*६. अस्मद्यज्ञमिच्छन्तौ,*

सा०-१।१३५।५

*७. हविः स्वीकरणार्थमस्मानात्मन इच्छन्,*

सा०-३।४१।७

अस्मत्सखि

१. अस्माकं सखिस्थानीयः। सखित्वेन चात्र तद्गातं व्यसनेषु अहानं लक्ष्यते। यथा सखा सख्युर्व्यसनेष्वहाता तथा त्वम् अस्माकम् अहाता भवेत्यर्थः,
स्क०-६।४७।२६
२. अस्मत्सखा,
वे० ६।४७।२६
३. वयं सखायो यस्य स तादृशः,
सा०-६।४७।२६

**अस्मत्रा**

१. अस्मान् प्रति,
उ०-१०।४४।३
२. अस्मासु,
वे०-८।१८।१४। वे०सा०-१।१३२।२, १०।४४।३
३. अस्मासु। अस्मद्विषये,
सा०-८।१८।१४

**अस्मद्र्य, ञ्च्**

१. अस्मदभिमुखम्,
वे०-१०।११६।६, वे०सा०-७।७९।५, ९।९३।४, सा०-६।१९।१
२. मदभिमुखम्,
वे०-६।१९।१
३. अस्मदभिमुखाञ्चनः,
सा०- १०।११६।६

**मम-सत्य**

१. संग्रामः,
उ०सा०-१०।४२।४
२. युद्धः,
वे०-१०।४२।४

**अस्मेरा**

१. स्मेरमुखाः,
वे०-२।३५।४
२. अस्मयमाना दर्परहिताः,
सा०-२।३५।४

**अस्रवन्ती**

१. अगच्छन्तीम्,
उ०सा०-१०।६३।१०
२. अविनश्वरीम्,
सा०-१०।६२।१०

**अस्रिध्**

१. क्षयरहिताः,
वे०सा०मु०-१।३।९
२. अक्षयाः,
स्क०-१।३।९, वे०-३।५८।७
३. अक्षीणः,
वे०-४।३२।२४, ४५।४, ५।४६।४, वे०सा०-९।८६।१८
४. अशोषयितारः,
स्क०-१।३।९
५. अनुपक्षीणौ,
सा०-३।५८।७
६. अहिंसकः,
सा०-४।३२।२४, ५।४६।४
७. अद्रोग्धारः,
सा०-४।४५।४

**अस्रिधान**

१. अक्षीयमाणैः,
सा०-७।६९।७
२. अक्षीणैः,
वे०-७।६९।७

**अस्रेधत्**

१. अक्षीणः,
वे०-७।५९।६, ८।६०।८
२. अनुपक्षीणाः,
वे०-३।२९।९
३. अक्षीणा अनुपरतसामर्थ्याः सन्तो यूयम्,

सा०-३।२९।९

*४. अक्षीणेन प्रभूतेन,*

सा०-३।१४।५

*५. अक्षीयमाणेन,*

वे०-३।१४।५

*६. अहिंसन्तः,*

सा०-७।५९।६

*७. अहिंसकैः,*

सा०-८।६०।८

**अस्त्रेधन्ती**

*१. अहिंसती,*

वे०सा०-८।२७।१८

*२. अक्षीयमाणा,*

वे०सा०-५।८०।३

*३. अशुष्यन्ती,*

सा०मु०-५।८०।३

**अस्त्रेमन्**

*१. प्रशस्तः,*

उ०सा०-१०।८।२

*२. उच्छ्रिततेजस्कः,*

वे०-१०।८।२

*३. क्षयरहितम्,*

सा०-३।२९।१३

*४. अपापम्,*

वे०-३।२९।१३

**अस्वप्नज्**

*१. अस्वपन्तः जागरूकाः,*

सा०-४।४।१२

*२. स्वापमर्कुवन्तः,*

वे०-४।४।१२

*३. असंजातस्वप्नः,*

सा०-२।२७।९

*४. जाग्रतः,*

वे०-२।२७।९

**अस्ववेश**

*१. स्वस्मिन्नायतनेन,*

वे०-७।३७।७

*२. स्वकीये स्थानेऽनुपविशन्तम्,*

सा०-७।३७।७

**अह**

*१. एव,*

उ०वे०सा०-१०।४३।६, वे०- १।१५१।७, १५४।६, २।१०।२, ४।२२।७, ५।३४।७, ६।३८।४, ७।२०।२, ८।११।४, ९।७७।२, १०।२८।१, वे०सा०-४।३०।७, ५।३।७, ८।४३।८, वे०सा० मु०-१।५२।११, ५।५२।६, सा०मु०-१।८४।१५

*२. खलु,*

सा०- १।१५१।७, १५४।६, २।१०।२

*३. विनिग्रहार्थीयः,*

स्क०-१।६।४, ५२।११, ८४।१५, सा०-१।१३५।८, सा०मु०-५।३४।३

*४. अह इति पूरणः,*

सा०- ४।३०।१०, ७।२०।२, १०।८९।१३, सा०मु०-५।८३।३

*५. अह इत्यवधारणार्थम्,*

सा०मु०-१।६।४, ८।११।४

*६. आश्चर्येऽहशब्दः,*

वे०-१।६।४, ५।८३।३

*७. अहशब्दोऽपि चार्थे,*

स्क०-६।८।४

*८. अह किञ्चेत्यर्थः,*

सा०-१०।६१।१९

*९. अह इति विनिश्चये,*

सा०-१०।७१।८

*१०. पूर्वं युष्माभिरनुज्ञातः,*

सा०-३।३३।११

*११. यथापूर्वम्,*
वे०-३।३३।११
*१२. सर्वदेवगण आगते सति,*
सा०-१०।२८।१

**अहन्**

*१. प्रातः,*
वे०-१।१२६।३
*२. प्रतिपदादीन्यहानि,*
सा०-३।३२।९
*३. दिवसः,*
वे०- ४।४५।६, वे०सा०- ९।९२।५, १०।३७।१०, सा०-२।१९।३, ४।१०।५, १६।३, ५।४८।३, ६।२६।१, ८।२२।११, १०।७।४, ३७।९
*४. दिवसानां मध्ये,*
सा०-१।१२६।३
*५. मरणदिवसात्,*
वे०-३।३२।१४
*६. दिवसाय दिवसनिर्वर्त्यकर्मणे,*
सा०-१०।४०।५
*७. अहोरात्रे,*
उ०वे०सा०- १०।३९।१२, उ०सा०- १०।१८।५, स्क०वे०सा०- ६।५८।१, वे०सा०- १।१२३।७, २।३२।२, ५।८२।८, सा०- १।१५१।९
*८. अहःशब्दसामर्थ्यदहोरात्रसाध्यं कर्मोच्यते,*
सा०- १०।१२।४
*९. अदानि सौमिकानि,*
सा०- १०।३२।८
*१०. कालाः,*
उ०- १०।३२।८
*११. आहन्तर्मर्यादया हिंसितः,*
उ०सा०-१०।१०।६
*१२. आहन्तः,*
वे०-१०।१०।६
*१३. हेतुभिः,*
वे०सा०-९।५५।३
*१४. वर्षर्तुसंबन्धिभिः,*
सा०-५।६२।२
*१५. एकस्मिन्ननुष्ठानदिने,*
वे०सा०मु०-१।३४।३
*१६. गुणयागदिवसानाम्,*
उ०-१०।७०।१

**अहविस्**

*१. अहोता,*
वे०- १।१८२।३
*२. यज्ञार्थवीररहितः,*
सा०-१।१८२।३

**अहति**

*अहताः,*
वे०सा०- ९।९६।४

**अहर्दिव**

*अहोरात्रयोः,*
वे०सा०-९।८६।४१

**अहर्दृश**

*१. सूर्यदृशः,*
वे०- ८।६६।१० (यास्क०- ६।२६)
*२. अहःशब्देन तदुत्पादक आदित्योऽभिधेयो भवति। तं पश्यन्तीत्यहर्दृशः। ननु सर्वे सूर्यं पश्यन्ति कोऽत्रातिशय इति उच्यते। इहैव जन्मनि सूर्यं पश्यन्ति न जन्मान्तरे। लुब्धका अयष्टारोऽन्धो तमसि मज्जन्ति। अथवा लौकिकान्येवाहनि पश्यन्ति न पारलौकिकान्यदृष्टानि। दृष्टप्रधाना हि नास्तिकाः,*
सा०-८।६६।१०

**अहर्विद्**

*१. अह्नो लम्भयितारौ,*
वे०-१।१५६।४, वे०सा०-८।५।९, २१
*२. अह्नो ज्ञातारौ,*
वे०-८।५।२१
*३. प्रभातसमये वेदितव्यौ स्तोव्या-वश्विनौ, अह्नि प्रभातसमये वेदि-तव्यौ स्तोतव्यौ,*
सा०- ८।५।९। ८।५।२१,
*४. लब्धार्हमुखाः,*
वे०-१।२।२
*५. अहः शब्द एकेनाह्ना निष्पाद्ये-ऽग्निष्टोमादिक्रतौ वैदिक व्यवहारेण प्रसिद्धः। क्रत्वभिज्ञा इत्यर्थः,*
सा०मु०- १।२।२
*६. अहश्शब्दोऽत्राह्ना यः समाप्यते ज्योष्टिटोमादिः सोमयागः तस्य वाचकः न दिवसस्य। प्रक्रान्तस्य ज्योतिष्टोमदेरहः परिमितस्य सोमयागस्य ज्ञातारः,*
स्क०- १।२।२
*७. अहर्वेत्तारं स्वर्गोत्पादकम्,*
सा०-१।१५६।४

**अहस्**

*१. अहोरात्रैः,*
वे०-१०।१४।९
*२. दिवसैः,*
सा०-१०।१४।९

**अहोरात्र**

*अहोरात्राणि,*
वे०सा०-१०।१९०।२

**अहना**

*उषा,*
वे०सा०-१।१२३।४

**अहस्त, ता**

*१. हस्तरहिता,*
उ०-१०।३४।९
*२. हस्तरहिता अप्यक्षाः,*
सा०-१०।३४।९
*३. पाणिरहिता,*
सा०-१०।२२।१४
*४. हस्तवर्जिता,*
वे० उ०- १०।२२।१४, वे०- १०।३४।९

**अहि**

*१. मेघः,*
स्क०-१।३२।५, ६।७२।३, स्क०सा० मु०- १।३२।१, २, वे०सा०-१०।१३९। ६, सा० - २।११।५, ३।३३।७, १०।९६।४
*२. अन्तरिक्षे वर्तमानं मेघम्,*
सा०-१०।१३३।२ (अन्तरिक्षे गतं मेघम्), सा०मु०-१।१०३।२, ७
*३. वृत्रः,*
सा०-६।१७।९, १०।९६।४, सा०मु०-१।३२।५, ५।२९।२
*४. वृत्रासुरम्,*
सा०-६।१७।१०
*५. आहननशीलं वृत्रम्,*
सा०-८।३।२०
*६. अहन्तव्यस्य वृत्रासुरस्य,*
सा०-८।९३।१४
*७. आहन्ता,*
वे०-१०।११३।३
*८. आहन्तव्येन,*
सा०-१०।११३।३
*९. जगतः आहन्तारम्,*
सा०-६।७२।३
*१०. उदकानि परिवृत्य तस्थिवां-समाहन्तारम्,*

वे०-६।७२।३
११. मेघानामाहन्तारम्,
सा०-७।३४।१६
१२. आगत्य हन्तारम्,
सा०-७।३८।७
१३. असुरः,
सा०-२।११।५
१४. अंहतेर्वा अहिर्गन्ता वृत्राख्यो व्यंसाख्यश्चासुरः,
स्क०-१।३५।५
१५. अहिनामानमसुरम्,
स्क०-१।१०३।२, ७
१६. सर्पः,
वे०सा०-४।१९।९, ७।१०४।९ सा०-६।७५।१४,
१७. कवयः,
वे०सा०-९।५४।१
१८. अत्थः स्त्रिय आहननात्,
सा०-९।७७।३
१९. अहिः आहननात् ( तु० यास्क. १७ ) इत्युक्तम्। आहन्ति हि स्त्री पुमांसमिति,
वे०-९।७७।३

**अहिघ्न**

१. अहिहननाय,
वे०-६।१८।१४
२. मेघहननाय। वृष्टिप्रदानायेत्यर्थः,
सा०-६।१८।१४

**अहिनामन्**

आगत्य हन्तीत्यहिः। तन्नामकानामित्यर्थः,
सा०-९।८८।४

**अहि-भानु**

१. आहन्तृदीप्तयः,
वे०-१।१७२।१
२. अहीयमानप्रकाशाः,
सा०-१।१७२।१

**अहि-मन्यु**

१. मन्युर्मन्यते दीप्तिकर्मणः। अगता अविनष्टा दीप्तिर्येभ्यः ते अहिमन्यवः। दीतिमन्तः इत्यर्थः,
स्क०- १।६४।८
२. अहीन दीप्तयो अहिमन्यवः। उत्कृष्टदीप्तयः,
स्क०- १।६४।८
३. अहिर्मेघोऽसुरो वा। मन्युः इत्यपि क्रोधनाम। अहिविषयः क्रोधो येषां ते अहिमन्यवः। दीप्तिमन्तः इत्यर्थः,
स्क०- १।६४।८
४. मननं ज्ञानं मन्युः। अहीनज्ञानाः। उत्कृष्टबुद्धय इत्यर्थः,
सा०-१।६४।८
५. आहननशीलमन्युयुक्ताः। यद्विषयः कोपो जायते तस्य हनने समर्था इत्यर्थः,
सा०मु, १।६४।८

**अहि-माय**

१. अहन्तव्य प्रज्ञाः,
वे०-६।५२।१५, १०।६३।४, सा०-१०।६३।४, (कैश्चिदप्यहन्तव्यप्रज्ञाः)
२. अहीनप्रज्ञा वा अहेर्वा मेघस्य असुरस्य वा मायाभिः परवञ्चनप्रज्ञाभिः प्रज्ञावन्तः,
उ०-१०।६३।४
३. 'माया' ( निघ. ३, ९ ) इति प्रज्ञानाम। अहीन प्रज्ञाः। अथवा अहिर्मेघः, तद्विषया प्रज्ञा येषां ते अहिमायाः। अथवा आहन्तृप्रज्ञाः,

स्क०-६।५२।१५। सा०-६।५२।१५,
(माया इति प्रज्ञानाम। आहन्तृप्रज्ञाः)
*४. आहन्त्र्यो माया यस्य,*
सा०-६।२०।७

**अहि-हत्य**

*१. अहिहननम्,*
वे०-१।६१।८, १३०।४ (अहिं हन्तुम्) ३।३२।१२
*२. अहेर्वृत्रस्य मेघस्य वा हननाय,*
सा०-१।१३०।४
*३. अहेर्वृत्रस्य हनने निमित्तभूते सति,*
सा०मु०-१।६१।८
*४. वृत्रहनने कर्मणि,*
सा०-३।३२।१२

**अहि-हन्**

*१. अहेर्वृत्रस्य मेघस्य वा हन्तर्हे इन्द्र,*
सा०-२।१३।५
*२. अहिं मेघं हतवानिन्द्रः,*
सा०-२।१९।३
*३. अहेर्हन्ता,*
वे०-२।१९।३, सा०-२।३०।१ (अहिं वृत्रं हतवते)

**अहि( बुध्निय, बुध्न्य )**

*१. बुध्नमन्तरिक्षम्। तत्र भवः अहिनामा देवः,*
सा०-२।३१।६
*२. बुध्न्यः। बुध्नमन्तरिक्षम्। तत्र भवः। अहिः। एत्यन्तरिक्ष इत्यहिः,*
सा०-६।४९।१४

*३. अन्तरिक्षे भवः अहिः एतत्संज्ञकः ऐते देवाः,*
सा०-१०।६६।११
*४. अहिः च बुध्न्यः देवः,*
वे०-१०।६६।११
*५. अन्तरिक्षगामी अहन्ता वा अहीनो वा अहन्यमानो वा एतन्नामको देवः स एव बुध्न्यः। बुध्नं बन्धकमन्तरिक्षम्। तदर्हतीति बुध्न्यः अन्तरिक्षचारी एतन्नामको देवः,*
सा०-१।१८६।५
*६. अहिः नाम मध्यमस्थानी देवः, बुध्नमन्तरिक्षं, तस्मिन् भवः,*
स्क०-६।४९।१४
*७. अन्तरिक्ष्यः,*
उ०-१०।६६।११
*८. अन्तरिक्षभवः मेघः,*
वे०-१।१८६।५

**अहिंसान**

*१. अहिंसतः,*
वे०सा०-५।६४।३, मु०-५।६४।३ (अहिंसकस्य, मित्रस्य)

**अहिंस्यमान**

*परैरपीड्यमानः,*
सा०-१।१४१।५

**अहूत**

*१. अनाहूताः,*
वे०-१०।१०७।९
*२. बलाधिक्येनानाहूयमानाः,*
सा०-१०।१०७।९

**अहृणान**

*१. अक्रुद्धः,*
वे०-७।८६।२

*२. अक्रुध्यन्,*
वे०सा०-१०।११६।७, सा०-७।८६।२

**अहृणीयमान, न**

१. *अक्रुध्यन्,*
वे०-१०।१०९।२, वे०सा०-५।६२।६
२. *पापापगमनेनालज्जमानः सन्,*
सा०-१०।१०९।२

**अहेडत्**

१. *अक्रुध्यन्,*
उ०वे०सा०- १०।३२।८, स्क०वे० सा० मु०-१।९१।४, वे०उ०- १०।७०।४, वे०सा०- २।३२।३, सा०- ७।६७।७
२. *हेड इति क्रोधनाम। अक्रुध्यता,*
सा०-१०।७०।४

**अहेडयत्**

१. *अक्रुध्यन्,*
उ०सा०-१०।३७।५
२. *अक्रोधयन्,*
वे०-१०।३७।५

**अह्नवाय्य**

*अहनवाय्यनामकं शत्रुम्,*
सा०-८।४५।२७

**अह्य**

*अह्यो गन्तव्यो वर्तनिर्मार्गभूतः,*
सा०-१०।१४४।४

**अह्यर्षू**

१. *सर्पाणाम्,*
वे०-२।३८।३
२. *अहिमाहन्तारं शत्रुमर्षन्त्यभि, गच्छन्तीत्यह्यर्षवः,*
सा०-२।३८।३

**अह्रय**

१. *अलज्जम्,*
वे०-५।७९।५
२. *उन्मुखम्,*
वे०-७।६७।६
३. *अनवनतः,*
वे०सा०-८।७०।१३
४. *अलज्जाकरे,*
सा०-१०।१४७।३
५. *अह्रीकम्,*
वे०-१०।१४७।३
६. *लज्जारहितः,*
वे०-१।७४।८ (अलज्जमानः), सा०मु०-१।७४।८
७. *अह्रियमाणमक्षीणमलज्जावहं वा,*
सा०-५।७९।५, अह्रीयमाणम् अक्षीणम्, मु०-५।७९।५

**अह्रयाण, णा**

१. *अह्रीतगमनः,*
वे०-४।४।१४।
२. *अह्रीतयानं प्रशस्तगमनमिन्द्रम्,*
सा०-१।६२।१०
३. *अह्रीतयानः,*
वे०- १।६२।१० (यास्क, ५।१५)
४. *अलज्जितगमनः,*
सा०-४।४।१४
५. *लज्जारहितं प्रगल्भमित्यर्थः,*
सा०मु०-१।६२।१०

**अह्रुत, ता**

१. *अहिंसितः,*
स्क०वे०-६।६१।८
२. *अनवपतितः,*
वे०सा०-१०।५६।२
३. *अकुटिल,*
सा०- ६।६१।८।, वे०सा०- ९।३४

अहुतप्सु

*१. अहिंसितरूपाः,*
स्क०वे०-१।५२।४
*२. अनन्तरूपाः,*
वे०-८।२०।७
*३. अकुटिलरूपाः,*
सा०-८।२०।७
*४. अकुटिलरूपाः शोभनावयवाः,*
सा०मु०-१।५२।४

*****

